TRIVANDRUM SANSKRIT SERIES.

NO. XXVI.

# THE ABHISHEKANÂTAKA

OF

## BHÂSA

EDITED WITH NOTES

BY

T. GAṆAPATI SÂSTRÎ

*Curator of the Department for the publication of Sanskrit manuscripts,*

TRIVANDRUM.

Bhasa's Works:—No. 11.

PUBLISHED UNDER THE AUTHORITY OF THE GOVERNMENT OF HIS HIGHNESS THE MAHARAJAH OF TRAVANCORE.

TRIVANDRUM:

PRINTED AT THE TRAVANCORE GOVERNMENT PRESS.

1913.

अनन्तशयनसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः २६.

---

# अभिषेकनाटकं

महाकविश्रीभासप्रणीतं

संस्कृतग्रन्थप्रकाशनकार्याध्यक्षेण

त. गणपतिशास्त्रिणा

संशोधितं

लघुटिप्पण्या च संयोजितम् ।

भासनाटकचक्रे एकादशम् ।

तच्च

अनन्तशयने

महामहिमश्रीमूलकरामवर्मकुलशेखरमहाराजशासनेन

राजकीयमुद्रणयन्त्रालये

मुद्रयित्वा प्रकाशितम् ।

कोळम्बाब्दाः १०८८, क्रैस्ताब्दाः १९१३.

# PREFACE.

The edition of the work is based on the following five palm leaf manuscripts in Malayalam character about two centuries old.

1. क. Belonging to the Palace Library, Trivandrum.
2. ख. Do. Do.
3. ग. Obtained from Kailasapuram Mr. Govinda Pisharodi, Kadutturutti.
4. घ. Obtained from Mr. Krishnan Tantri, Chengannur.
5. ङ. From the Panthalam Palace.

The subject matter of the drama is the story of Râmâyaṇa as related in the Kishkindhâkâṇḍa, Sundarakâṇḍa and Yuddhakâṇḍa; and the installation of Râma, by the Gods, at the end, with the permission of Dasaratha.

Trivandrum.

T. GAṆAPATI SÂSTRÎ.

# निवेदना ।

---

अभिषेकनाटकस्य संशोधनाधारभूता ग्रन्था एते—

| | | |
|---|---|---|
| १. | राजकीयग्रन्थशालास्थः | क. संज्ञः. |
| २. | तथा | ख. संज्ञः. |
| ३. | कैलासपुरगोविन्दपिषारोटिसकाशादधिगतः | ग. संज्ञः. |
| ४. | चेङ्ङन्नूर् श्रीकृष्णतन्त्रिसकाशादधिगतः | घ. संज्ञः. |
| ५. | पन्तलराजसम्बन्धी | ङ. संज्ञः. |

सर्वे एते तालपत्रात्मकाः केरलीयलिपय उपद्विशतवर्षवृद्धाश्च ।

अत्रेतिवृत्तं श्रीरामायणकिष्किन्धा-सुन्दर-युद्धकाण्डगतमुपात्तम्, अन्ते च देवैर्दशरथानुमत्या रामस्याभिषेककरणम् ।

अनन्तशयनम्. त. गणपतिशास्त्री.

॥ श्रीः ॥

श्रीगणेशाय नमः ।

महाकविश्रीभासप्रणीतम्

# अभिषेकनाटकम् ।

---

(नान्द्यन्ते ततः प्रविशति सूत्रधारः)

**सूत्रधारः—**

यो गाधिपुत्रमखविघ्नकराभिहन्ता
युद्धे विराधखरदूषणवीरहन्ता ।
दर्पोद्धतोल्बणकबन्धकपीन्द्रहन्ता
पायात् स वो निशिचरेन्द्रकुलाभिहन्ता ॥ १ ॥

एवमार्यमिश्रान् विज्ञापयामि । (परिक्रम्यावलोक्य) अये किन्नुखलु मयि विज्ञापनव्यग्रे शब्द इव श्रूयते । अङ्ग! पश्यामि ।

(नेपथ्ये)

सुग्रीव! इत इतः ।

(प्रविश्य)

**पारिपार्श्विकः—भाव!**

---

१. 'दूणोघतक' ख. पाठः.

कुतोनुखल्वेष समुत्थितो ध्वनिः
प्रवर्तते श्रोत्रविदारणो महान् ।
प्रचण्डवातोद्धतभीमगामिनां
वलाहकानामिव खेऽभिगर्जताम् ॥ २ ॥

**सूत्रधारः**—मार्ष! किं नावगच्छसि। एष खलु सीतापहरणजनितसन्तापस्य रघुकुलप्रदीपस्य सर्वलोकनयनाभिरामस्य रामस्य च, दाराभिमर्शननिर्विषयीकृतस्य[1] सर्वहर्यृक्षराजस्य सुविपुलमहाग्रीवस्य सुग्रीवस्य च परस्परोपकारकृतप्रतिज्ञयोः सर्ववानराधिपतिं हेममालिनं वालिनं हन्तुं[2] समुद्योगः प्रवर्तते । तत एतौ हि,

इदानीं राज्यविभ्रष्टं सुग्रीवं रामलक्ष्मणौ ।
पुनः स्थापयितुं प्राप्ताविन्द्रं हरिहराविव ॥ ३ ॥

(निष्क्रान्तौ)

स्थापना ।

---

(ततः प्रविशति रामो, लक्ष्मणसुग्रीवौ, हनुमांश्च)

**रामः**—सुग्रीव! इत इतः ।

मत्सायकाञ्चितहतभिन्नविकीर्णदेहं
शत्रुं तवाद्य सहसा[3] भुवि पातयामि ।

---

१. 'स्य सु' क. ख. ग. पाठः. २. 'समुद्धर्तुम्' घ. पाठः. ३. 'समरे विनिपा' ख. पाठः.

राजन्! भयं त्यज ममापि* समीपवर्त्ती
दृष्टस्त्वया च समरे निहतः स वाली ॥ ४ ॥

**सुग्रीवः**—देव! अहं खल्वार्यस्य प्रसादाद् देवानामपि राज्यमाशङ्के, किं पुनर्वानराणाम्। कुतः,

मुक्तो देव! तवाद्य वालिहृदयं भेत्तुं न मे संशयः
सालान् सप्त महावने हिमगिरेः शृङ्गोपमाञ्छ्रीधर!।
भित्त्वा वेगवशात् प्रविश्य धरणीं गत्वा च नागालयं
मज्जन् वीर! पयोनिधौ पुनरयं सम्प्राप्तवान् सायकः ॥ ५ ॥

**हनूमान्**—

तव नृप! मुखनिःसृतैर्वचोभि-
र्विगतभया हि वयं विनष्टशोकाः।
रघुवर! हरये जयं प्रदातुं
गिरिमभिगच्छ सनीरनीरदाभम् ॥ ६ ॥

**लक्ष्मणः**—आर्य! सोपस्नेहतया[1] वनान्तरस्याभितः खलु किष्किन्धया भवितव्यम्।

**सुग्रीवः**—सम्यगाह कुमारः।

सम्प्राप्ता हरिवरबाहुसम्प्रगुप्ता
किष्किन्धा तव नृप! बाहुसम्प्रगुप्ता† ।

---

१. 'या वृक्षाणामभि' ख. पाठः.

---

* 'ममासि' इति स्यात्। † 'गुप्तैः' इति स्यात्। अस्माभिरिति च विशेष्यं गम्यम्।

तिष्ठ त्वं नृवर! करोम्यहं विसंज्ञं
नादेन प्रचलमहीधरं नृलोकम् ॥ ७ ॥

**रामः**— भवतु, गच्छ।

**सुग्रीवः**— यदाज्ञापयति देवः। (परिक्रम्य) भोः!

अपराधमनुद्दिश्य परित्यक्तस्त्वया विभो!।
युद्धे त्वत्पादशुश्रूषां सुग्रीवः कर्तुमिच्छति ॥ ८ ॥

(नेपथ्ये)

**कथं कथं सुग्रीव इति।**

(ततः प्रविशति वाली, गृहीतवस्त्रया तारया सह)

**वाली**— कथं कथं सुग्रीव इति।

तारे! विमुञ्च मम वस्त्रमनिन्दिताङ्गि!
प्रस्रस्तवक्त्रनयने! किमसि प्रवृत्ता।
सुग्रीवमद्य समरे विनिपात्यमानं
तं पश्य शोणितपरिप्लुत[2]सर्वगात्रम् ॥ ९ ॥

**तारा**— (क) पसीअउ पसीअउ महाराओ। [3]अप्पेण कारणेण ण आगमिस्सइ सुग्गीओ। ता अमच्चवग्गेण सह सम्म-

---

(क) प्रसीदतु प्रसीदतु महाराजः। अल्पेन कारणेन नागमिष्यति सुग्रीवः।

---

१. 'मः — बाढम्। भ' क. ख. पाठः. २. 'तवक्त्रनेत्रम्' क. ख. घ. पाठः. ३. 'अ-अल्पेण कारणेण आ' क. घ. पाठः.

न्तिअ गन्तव्वं ।

वाली — आः,

शक्रो वा भवतु गतिः शशाङ्कवक्त्रे!
शत्रोर्मे निशितपरश्वथः शिवो वा ।
नालं मामभिमुखमेत्य सम्प्रहर्तुं
विष्णुर्वा विकसितपुण्डरीकनेत्रः ॥ १० ॥

तारा — (क) पसीअउ पसीअउ माहाराओ । इमस्स जणस्स अणुग्गहं दाव करेउं अ(र्हे?रिह)दि महाराओ ।

वाली — श्रूयतां मत्पराक्रमः ।

तारे! मया खलु पुरामृतमन्थनेऽपि
गत्वा प्रहस्य सुरदानवदैत्यसङ्घान् ।
उत्फुल्लनेत्रमुरगेन्द्रमुदग्ररूप-
माकृष्यमाणमवलोक्य सुविस्मितास्ते ॥ ११ ॥

तारा — (ख) पसीअउ पसीअउ महाराओ ।

---

तदमात्यवर्गेण सह संमन्त्र्य गन्तव्यम् ।

(क) प्रसीदतु प्रसीदतु महाराजः । अस्य जनस्यानुग्रहं तावत् कर्तुमर्हति महाराजः ।

(ख) प्रसीदतु प्रसीदतु महाराजः ।

---

१. 'दतु पसीदतु म' क. ख. घ. पाठः.

वाली—आः, मम वशानुवर्तिनी भव। प्रविश त्वमभ्यन्तरम्।

तारा—(क) एसा गच्छामि मन्दभाआ। (निष्क्रान्ता)

वाली—हन्त प्रविष्टा तारा। यावदहं सुग्रीवं भग्नग्रीवं करोमि। (द्रुतमुपगम्य) सुग्रीव! तिष्ठ तिष्ठ।

इन्द्रो वा शरणं तेऽस्तु प्रभुर्वा मधुसूदनः।
मच्चक्षुष्पथमासाद्य सजीवो नैव यास्यसि॥ १२॥

इत इतः।

सुग्रीवः—यदाज्ञापयति महाराजः।

(उभौ नियुद्धं कुरुतः)

रामः—एष एष वाली,

सन्दष्टोष्ठश्चण्डसंरक्तनेत्रो
मुष्टिं कृत्वा गाढमुद्वृत्तदंष्ट्रः।
गर्जन् भीमं वानरो भाति युद्धे
संवर्ताग्निः सन्दिधक्षुर्यथैव॥ १३॥

लक्ष्मणः—सुग्रीवमपि पश्यत्वार्यः,

विकसितशतपत्ररक्तनेत्रः
कनकमयाङ्गदनद्धपीनबाहुः।
हरिवरमुपयाति वानरत्वाद्
गुरुमभिभूय सतां विहाय वृत्तम्॥ १४॥

---

(क) एषा गच्छामि मन्दभागा।

वालिना ताडितः[1] पतितः सुग्रीवः ।

हनूमान् — हा धिक् । (ससम्भ्रमं राममुपगम्य) जयतु देवः । अस्यैषावस्था ।

बलवान् वानरेन्द्रस्तु दुर्बलश्च पतिर्मम ।
अवस्था शपथश्चैव सर्वमार्येण चिन्त्यताम् ॥ १५ ॥

रामः — हनूमन्! अलमलं सम्भ्रमेण । एतदनुष्ठीयते । (शरं मुक्त्वा) हन्त पतितो वाली ।

लक्ष्मणः — एष एष वाली,

रुधिरकलितगात्रः स्रस्तसंरक्तनेत्रः
कठिनविपुलबाहुः काललोकं विविक्षुः ।
अभिपतति कथञ्चिद् धीरमाकर्षमाणः*
शरवरपरिवीतं शान्तवेगं शरीरम् ॥ १६ ॥

वाली — (मोहमुपगम्य पुनः समाश्वस्य शरं नामाक्षराणि वाचयित्वा राममुद्दिश्य)

युक्तं भो! नरपतिधर्ममास्थितेन
युद्धे मां छलयितुमक्रमेण राम! ।
वीरेण व्यपगतधर्मसंशयेन
लोकानां छलमपनेतुमुद्यतेन ॥ १७ ॥

---

१. 'तः सुग्रीवः पतति ।' क घ पाठः.

---

* चानद्यन्तमिदम् ।

हन्त भोः!

भवता सौम्यरूपेण यशसो भाजनेन च ।
छलेन मां प्रहरता प्ररूढमयशः कृतम् ॥ १८ ॥

भो राघव! चीरवल्कलधारिणा वेषविपर्यस्ताचित्तेन मम भ्रात्रा सह युद्धव्यग्रस्याधर्म्यः खलु प्रच्छन्नो वधः ।

रामः—कथमधर्म्यः खलु प्रच्छन्नो वध इति ।

वाली—कः संशयः ।

रामः—न खल्वेतत् । पश्य,

वागुराच्छन्नमाश्रित्य मृगाणामिष्यते वधः ।
वध्यत्वाच्च मृगत्वाच्च भवाञ्छन्नेन दण्डितः ॥ १९ ॥

वाली—दण्ड्य इति मां भवान् मन्यते ।

रामः—कः संशयः ।

वाली—केन कारणेन ।

रामः—अगम्यागमनेन ।

वाली—अगम्यागमनेनेति । एषोऽस्माकं धर्मः ।

रामः—ननु युक्तं भोः!

भवता वानरेन्द्रेण धर्माधर्मौ विजानता ।
आत्मानं मृगमुद्दिश्य भ्रातृदाराभिमर्शनम् ॥ २० ॥

वाली—भ्रातृदाराभिमर्शनेन तुल्यदोषयोरहमेव दण्डितो, न सुग्रीवः ।

रामः — *दण्डितस्त्वं हि दण्ड्यत्वाद्, अदण्ड्यो नैव दण्ड्यते ।

वाली —

सुग्रीवेणाभिमृष्टाभूद् धर्मपत्नी गुरोर्मम ।
तस्य दाराभिमर्शेन कथं दण्ड्योऽस्मि राघव! ॥ २१ ॥

रामः — न त्वेव हि कदाचिज्ज्येष्ठस्य यवीयसो दाराभिमर्शनम् ।

वाली — हन्त अनुत्तरा वयम् । भवता दण्डितत्वाद् विगतपापोऽहं ननु ।

रामः — एवमस्तु ।

सुग्रीवः — हा धिक् ।

करिकरसदृशौ गजेन्द्रगामिं-
स्तव रिपुशस्त्रपरिक्षताङ्गदौ च ।
अवनितलगतौ समीक्ष्य बाहू
हरिवर! हा पततीव मेऽद्य चित्तम् ॥ २२ ॥

वाली — सुग्रीव! अलमलं विषादेन । ईदृशो लोकधर्मः ।

(नेपथ्ये)

हा हा महाराओ ।

---

* इदं वाक्यं श्लोकार्धमिव भासते ।

वाली — सुग्रीव! संवार्यतां संवार्यतां स्त्रीजनः। एवंगतं नार्हति मां द्रष्टुम्।

सुग्रीवः — यदाज्ञापयति महाराजः। हनूमन्! एवं क्रियताम्।

हनूमान् — यदाज्ञापयति कुमारः। (निष्क्रान्तः)

(ततः प्रविशत्यङ्गदो हनूमांश्च)

हनूमान् — अङ्गद! इत इतः।

अङ्गदः —

श्रुत्वा कालवशं यान्तं हरिमृक्षगणेश्वरम्।
समापतितसन्तापः प्रयामि शिथिलक्रमः॥ २३॥

हनूमन्! कुत्र महाराजः।

हनूमान् — एष महाराजः,

शरनिर्भिन्नहृदयो विभाति धरणीतले।
गुहशक्तिसमाक्रान्तो यथा क्रौञ्चाचलोत्तमः॥ २४॥

अङ्गदः — (उपसृत्य) हा महाराज!

अतिबलसुखशायी पूर्वमासीर्हरीन्द्रः
क्षितितलपरिवर्ती क्षीणसर्वाङ्गचेष्टः।

शरवरपरिवीतं व्यक्तमुत्सृज्य देहं
किमभिलषसि वीरस्वर्गमद्या(पि?भि)गन्तुम् ॥ २५॥

(इति भूमौ पतितः)

वाली — अङ्गद! अलमलं विषादेन[1]। भोः सुग्रीव!

मया कृतं दोषमपास्य बुद्ध्या
त्वया हरीणामधिपेन सम्यक् ।
विमुच्य रोषं परिगृह्य[2] धर्मं
कुलप्रवालं परिगृह्यतां नः ॥ २६ ॥

सुग्रीवः — यदाज्ञापयति महाराजः ।

वाली — भो राघव! यस्मिन् कस्मिन् वापराधेऽनयोर्वानरचापलं क्षन्तुमर्हसि ।

रामः[3] — बाढम् ।

वाली — सुग्रीव! प्रतिगृह्यतामस्मत्कुलधनं हेममाला ।

सुग्रीवः — अनुगृहीतोऽस्मि । (प्रतिगृह्णाति)

वाली — हनूमन्! आपस्तावत् ।

हनूमान् — यदाज्ञापयति महाराजः । (निष्क्रम्य प्रविश्य) इमा आपः ।

---

१. 'न । ईदृशो लोकधर्मः । भोः' क. पाठः. २. 'प्रतिगृ' क पाठः. ३. 'मः— एवमस्तु । बा' क. पाठः.

वाली — (आचम्य) परित्यजन्तीव मां प्राणाः। इमा गङ्गाप्रभृतयो महानद्य एता उर्वश्यादयोऽप्सरसो मामभिगताः। एष सहस्रहंसप्रयुक्तो वीरवाही विमानः कालेन प्रेषितो मां नेतुमागतः। भवतु। अयमयमागच्छामि। (स्वर्यातः)

सर्वे — हा हा महाराज!

रामः — हन्त स्वर्गं गतो वाली[1]। सुग्रीव! क्रियतामस्य संस्कारः।

सुग्रीवः — यदाज्ञापयति देवः।

रामः — लक्ष्मण! सुग्रीवस्याभिषेकः कल्प्यताम्।

लक्ष्मणः — यदाज्ञापयत्यार्यः।

(निष्क्रान्ताः सर्वे)

प्रथमोऽङ्कः।

---

१. 'स्वर्गं गतः' क. घ. पाठः.

## अथ द्वितीयोऽङ्कः ।

(ततः प्रविशति ककुभः)

**ककुभः**— निष्ठितप्रायत्वात् कार्यस्याहारव्यापृताः सर्वे वानरयूथपाः[1]। तस्मादहमपि किञ्चिदाहारजातं सम्भावयामि[2]। (तथा करोति)

(प्रविश्य)[3]

**बिलमुखः**— (क) पेसिओ ह्मि महाळाएण सुग्गीवेण— अय्यरामस्स किदोवआरप्पच्चुवआरणिमित्तं सव्वासु दिसासु सीदाविअअणे पेसिआ सव्वे वाणरा आअदा । तेसं दक्खिणापहमुहस्स कुमारस्स अङ्गदस्स पवुत्तिं जाणिअ सिग्घं आअच्छत्ति । ता कहिंणुहु गओ कुमारो । (परिक्रम्याग्रतो विलोक्य[4]) एसो अय्यकउहो । जाव णं पुच्छामि । (उपसृत्य) सुहं अय्यस्स ।

**ककुभः**— अये बिलमुखः । कुतो भवान् ।

---

(क) प्रेषितोऽस्मि महाराजेन सुग्रीवेण— आर्यरामस्य कृतोपकारप्रत्युपकारनिमित्तं सर्वासु दिशासु सीताविचयने प्रेषिताः सर्वे वानरा आगताः । तेषां दक्षिणापथमुखस्य कुमारस्याङ्गदस्य प्रवृत्तिं ज्ञात्वा शीघ्रमागच्छेति । तत् क्वनुखलु गतः कुमारः । एष आर्यककुभः । यावदेनं पृच्छामि । सुखमार्यस्य ।

---

१. 'रपतयः ।' क. ख. पाठः. २. 'म्पादया' क, पाठः. ३. '(ततः प्रविशति बिलमुखः)' ख, पाठः. ४. 'क्य) । अम्मो ए' क. पाठ..

**बिलमुखः**—(क) अय्य! महाळाअस्स सासणेण कुमारं अङ्गदं पेक्खिदुं आअदो ह्मि।

**ककुभः**—अपि कुशली आर्यरामो महाराजश्च।

**बिलमुखः**—आम।

**ककुभः**—कोऽभिप्रायो महाराजस्य।

**बिलमुखः**—(ख) पेसिओ ह्मि (इति पूर्ववत् पठति)

**ककुभः**—किं न जानीषे निष्ठितमर्धं कार्यस्य।

**बिलमुखः**—किं किम्।

**ककुभः**—श्रूयतां,

लब्ध्वा वृत्तान्तं रामपत्न्याः खगेन्द्राद्
आरुह्यागेन्द्रं सद्विपेन्द्रं महेन्द्रम्।
लङ्कामभ्येतुं वायुपुत्रेण शीघ्रं
वीर्यप्राबल्याल्लङ्घितः सागरोऽद्य॥ १॥

तस्मादागच्छ कुमारपादमूलमेव संश्रयावः।

(निष्क्रान्तौ)

**विष्कम्भकः।**

---

(क) आर्य! महाराजस्य शासनेन कुमारमङ्गदं प्रेक्षितुमागतोऽस्मि।

(ख) प्रेषितोऽस्मि।

(ततः प्रविशति राक्षसीगणपरिवृता सीता)

**सीता** — (क) हद्धि अदिधीरा खु ह्मि मन्दभाआ । जा अय्यउत्तविरहिदा रक्खसराअभवणं आणीदा अणिट्ठाणि अणरिहाणि जहमणोरहप्पवुत्ताणि वअणाणि साविअमाणा जीवामि मन्दभाआ । आदु अय्यउत्तसाअअप्पच्चएण कहं[1] वि अत्ताणं पय्यवत्थावेमि । किंणुखु अज्ज पज्जालिअमाणे [2]कम्मआरग्गिमण्डळे उदअप्पसेओ विअ किञ्चि हिअअप्पसादो समुप्पण्णो । किंणुखु मं अन्तरेण पसण्णहिअओ अय्यउत्तो भवे ।

(ततः प्रविशति हनूमान् अङ्गुलीयकहस्तः)

**हनूमान्** — (लङ्कां प्रविश्य) अहो रावण[3]भवन[4]स्य विन्यासः ।

कनकरचितचित्रतोरणाढ्या
मणिवरविद्रुमशोभितप्रदेशा ।

(क) हा धिग् अतिधीरा खल्वस्मि मन्दभागा। यार्यपुत्रविरहिता राक्षसराजभवनमानीतानिष्टान्यनर्हाणि यथामनोरथप्रवृत्तानि वचनानि श्राव्यमाणा जीवामि मन्दभागा । अथवा आर्यपुत्रसायकप्रत्ययेन कथमप्यात्मानं पर्यवस्थापयामि । किन्नुखल्वद्य प्रज्वाल्यमाने कर्मकाराग्निमण्डले उदकप्रसेक इव किञ्चिद् हृदयप्रसादः समुत्पन्नः । किन्नुखलु मामन्तरेण प्रसन्नहृदय आर्यपुत्रो भवेत् ।

---

१. 'हं वि अ' क. पाठः. २. 'कमआ' क., 'कमुआ' घ. पाठः. ३. 'णस्य भवनवि' क. घ. पाठः. ४. 'नवि' ख. पाठः.

विमलविकृतसञ्चितैर्विमानै-
र्वियति महेन्द्रपुरीव भाति लङ्का ॥ २ ॥

अहोतुखलु,

एतां प्राप्य दशग्रीवो राजलक्ष्मीमनुत्तमाम् ।
विमार्गप्रतिपन्नत्वाद् व्यापादयितुमुद्यतः ॥ ३ ॥

(सर्वतो गत्वा) विचरितप्राया मया लङ्का ।

गर्भागारविनिष्कुटेषु बहुशः शालाविमानादिषु
स्नानागारनिशाचरेन्द्रभवनप्रासादहर्म्येषु च ।
पानागारनिशान्तदेशविवरेष्वाक्रान्तवानस्म्यहं
सर्वं भो! विचितं न चैव नृपतेः पत्नी मया दृश्यते ॥ ४ ॥

अहो व्यर्थो मे परिश्रमः । भवतु, एतद्धर्म्याग्रमारुह्यावलोकयामि । (तथा कृत्वा) अये अयं प्रमदवनराशिः । इमं प्रविश्य परीक्षिष्ये । (प्रविश्यावलोक्य) अहो प्रमदवनसमृद्धिः । इह हि,

कनकरचितविद्रुमेन्द्रनीलै-
र्विकृतमहाद्रुमपङ्क्तिचित्रदेशा ।
रुचिरतरनगा विभाति शुभ्रा
नभसि सुरेन्द्रविहारभूमिकल्पा ॥ ५ ॥

---

१. 'आरुह्यावलोक्य)' क. ग. पाठः.

अपि च,

चित्रप्रस्रुतहेमधातुरुचिराः शैलाश्च दृष्टा मया
नानावारिचराण्डजैर्विरचिता* दृष्टा मया दीर्घिकाः ।
नित्यं पुष्पफलाढ्यपादपयुता देशाश्च दृष्टा मया
सर्वं दृष्टमिदं हि रावणगृहे सीता न दृष्टा मया ॥ ६ ॥

कोनुखल्वेतस्मिन् प्रदेशे सप्रभ इव दृश्यते । तत्र तावदवलोकयामि । (तथा कृत्वा) अये कानुखल्वियम् ।

राक्षसीभिः परिवृता विकृताभिः सुमध्यमा ।
नीलजीमूतमध्यस्था विद्युल्लेखेव शोभते ॥ ७ ॥

यैषा,

असितभुजगकल्पां धारयन्त्येकवेणीं
करपरिमितमध्या कान्तसंसक्तचित्ता ।
अनशनकृशदेहा बाष्पसंसिक्तवक्त्रा
सरसिजवनमालेवातपे विप्रविद्धा ॥ ८ ॥

अये कथं दीपिकावलोकः । (विलोक्य) अये रावणः ।

मणिविरचितमौलिश्चारुताम्रायताक्षो
मदसललितगामी मत्तमातङ्गलीलः ।
युवतिजने[2]निकाये भात्यसौ राक्षसेशो
हरिरिव हरिणीनामन्तरे चेष्टमानः ॥ ९ ॥

---

१. 'सा दर्शिता' ग. पाठः. २. 'नगमृहे' ख., 'नगमांपे' घ. पाठः.

* 'विंचरिता' इति स्यात् ।

किमिदानीं करिष्ये। भवतु, दृष्टम्। एनमशोकपादपमारुह्य कोटरान्तरितो भूत्वा दृढं वृत्तान्तं ज्ञास्यामि। (तथा करोति)

(ततः प्रविशति रावणः सपरिवारः)

**रावणः—**

दिव्यास्त्रैः सुरदैत्यदानवचमूविद्रावणं रावणं
युद्धे क्रुद्धसुरेभदन्तकुलिशव्यालीढवक्षस्स्थलम्।
सीता *मामविवेकिनी न रमते सक्ता च मुग्धेक्षणा
क्षुद्रे क्षत्रियतापसे ध्रुवमहो दैवस्य विघ्नक्रिया॥ १०॥

(ऊर्ध्वमवलोक्य) एष एष चन्द्रमाः,

रजतरचितदर्पणप्रकाशः
करनिकरैर्हृदयं ममाभिपीड्य।
उदयति गगने विजृम्भमाणः
कुमुदवनप्रियबान्धवः शशाङ्कः॥ ११॥

(परिक्रम्य) एषा सीता पादपमूलमाश्रित्य ध्यानसंवीतहृदयानशनक्षामवदना स्वदेहमिव प्रवेष्टुकामा सङ्गूढस्तनोदरी दुर्दिनान्तर्गता चन्द्रलेखेव राक्षसीगणपरिवृतोपविष्टा। यैषा,

अपास्य भोगान् मां चैव श्रियं च महतीमिमाम्।
मानुषे न्यस्तहृदया नैव वश्यत्वमागता॥ १२॥

---

* माम उद्दिश्येति शेषः।

**हनूमान्**—हन्त सुविज्ञातम् ।

इयं सा राजतनया पत्नी रामस्य मैथिली ।
सिंहदर्शनवित्रस्ता मृगीव परितप्यते ॥ १३ ॥

**रावणः**—(उपेत्य)

सीते! त्यज त्वं व्रतमुग्रचर्यं
भजस्व मां भामिनि! सर्वगात्रैः ।
अपास्य तं मानुषमद्य भद्रे!
गतायुषं कामपथान्निवृत्तम ॥ १४ ॥

**सीता**—(क) हस्सो खु रावणओ, जो *वअणगदसिद्धिं
वि ण जाणादि ।

**हनूमान्**—(सक्रोधम्) अहो रावणस्यावलेपः ।

तौ च बाहू नविज्ञाय तच्चापि सुमहद् धनुः ।
सायकं चापि रामस्य गतायुरिति भाषते ॥ १५ ॥

न शक्नोमि रोषं धारयितुम् । भवतु, अहमेवार्यरामस्य कार्यं साधयामि । अथवा,

---

(क) हास्यः खलु रावणकः, यो वचनगतसिद्धिमपि न जानाति ।

---

१. 'खु सि रा' क. ख. ग. ङ. पाठः. २. 'णासि ।' क. ख. ग. ङ. पाठः.

---

* वचनं शापवाक्यम् आशीर्वाक्यं वा गता आश्रिता सिद्धिः अशुभनिष्पत्तिः शुभनिष्पत्तिर्वा यस्यास्तां वचनगतसिद्धिं पातिव्रत्यमहिम्ना वाङ्मात्रेण दुर्जननिग्रहणशक्तामित्यर्थः । मामिति शेषः ।

यद्यहं रावणं हन्मि कार्यसिद्धिर्भविष्यति ।
यदि मां प्रहरेद् रक्षो महत् कार्यं विपद्यते ॥ १६ ॥

**रावणः**—

वरतनु! तनुगात्रि! कान्तनेत्रे!
कुवलयदामनिभां विमुच्य वेणीम् ।
बहुविधमणिरत्नभूषिताङ्गं
दशशिरसं मनसा भजस्व देवि! ॥ १७ ॥

**सीता**—(क) हं विपरीओ खु धम्मो, जं जीवदि खु अअं पापरक्खसो ।

**रावणः**—ननु देवि!

**सीता**—(ख) सत्तो सि ।

**रावणः**—हहह, अहो पतिव्रतायास्तेजः ।

देवाः सेन्द्रादयो भग्ना दानवाश्च मया रणे ।
सोऽहं मोहं गतोऽस्म्यद्य सीतायास्त्रिभिरक्षरैः ॥ १८ ॥

(नेपथ्ये)

[1]जयतु देवः । जयतु लङ्केश्वरः । जयतु स्वामी । जयतु महा-

(क) हं, विपरीतः खलु धर्मः, यद् जीवति खल्वयं पापराक्षसः ।
(ख) शप्तोऽसि ।

1. 'दश नाडिकाः पूर्णाः । गतः पूर्वो यामः । अति' ख. ग. घ. ङ. पाठः ।

राजः । दश नाडिकाः पूर्णाः । अतिक्रामति स्नानवेला । इत इतो महाराजः ।

(निष्क्रान्तः सपरिवारो रावणः)

हनूमान्— हन्त निर्गतो रावणः, सुप्ताश्च राक्षसस्त्रियः । अयं कालो देवीमुपसर्पितुम् । (कोटरादवरुह्य) जयत्वविधवा ।

प्रेषितोऽहं नरेन्द्रेण रामेण विदितात्मना ।
त्वद्गतस्नेहसन्तापविक्लबीकृतचेतसा ॥ १९ ॥

सीता— (आत्मगतम्) (क) कोणुखु अअं, पापरक्खसो अय्यउत्तकेरओ त्ति अत्ताणं ववदिसिअ बाणररूवेण मं वञ्चिदुकामो भवे । भोदु, तुह्णिआ भविस्सं ।

हनूमान्— कथं न प्रत्येति भवती । अलमन्यशङ्कया । श्रोतुमर्हति भवती ।

इक्ष्वाकुकुलदीपेन सन्धाय हरिणा त्वहम् ।
प्रेषितस्त्वद्विचित्यर्थं हनूमान् नाम वानरः ॥ २० ॥

---

(क) कोनुखल्वयं, पापराक्षस आर्यपुत्रसंबन्धीत्यात्मानं व्यपदिश्य वानररूपेण मां वञ्चयितुकामो भवेत् । भवतु, तूष्णीका भविष्यामि ।

---

१. 'पाद् बि' क. ख. घ. पाठः. २ 'प्रत्याययति भ' ख. प्रत्याययति देवा । अ' क. ङ. पाठः.

**सीता** — (आत्मगतम्) (क) जो वा को वा भोदु । अय्यउत्तणामसङ्कित्तणेण अहं एदेण अभिभासिस्सं । (प्रकाशम्) भद्द ! को वुत्तन्तो अय्यउत्तस्स ।

**हनूमान्** — भवति ! श्रूयताम्,

अनशनपरितप्तं पाण्डु स क्षामवक्त्रं
तव वरगुणचिन्तावीतलावण्यलीलम् ।
वहति विगतधैर्यं हीयमानं शरीरं
मनसिजशरदग्धं बाष्पपर्याकुलाक्षम् ॥ २१ ॥

**सीता** — (आत्मगतम्) (ख) हद्धि वीळिआ[2] खु ह्मि मन्दभाआ एवं सोअन्तं अय्यउत्तं सुणिअ । अय्यउत्तस्स विरहपरिस्समो वि मे सफळो संवुत्तो[3] त्ति पेक्खामि, जदि खु अअं वाणरो सच्चं मन्तेदि । अय्यउत्तस्स इमस्सिं जणे अणुक्कोसं परिस्समं च सुणिअ सुहस्स दुक्खस्स अ अन्तरे डोळाअदि विअ मे

(क) यो वा को वा भवतु । आर्यपुत्रनामसंकीर्तनेनाहमेतेनाभिभाषिष्ये । भद्र ! को वृत्तान्त आर्यपुत्रस्य ।

(ख) हा धिग् व्रीडिता खल्वास्मि मन्दभागा एवं शोचन्तमार्यपुत्रं श्रुत्वा । आर्यपुत्रस्य विरहपरिश्रमोऽपि मे सफलः संवृत्त इति पश्यामि, यदि खल्वयं वानरः सत्यं मन्त्रयते । आर्यपुत्रस्यास्मिन् जनेऽनुक्रोशं परिश्रमं च श्रुत्वा सुखस्य दुःखस्य चान्तरे

१. '(स्वगतम्) वा' ख. पाठः. २. 'अदिधारा खु' क., 'पाडिदा खु' ङ. पाठः, ३. 'त्तो । जदि' ख. पाठः.

हिअअं । (प्रकाशम्) भद्द ! कहं तुह्मेहि अय्यउत्तस्स सङ्गमो जादो ।

**हनूमान्** — भवति ! श्रूयतां ।

हत्वा वालिनमाहवे कपिवरं त्वत्कारणादग्रजं
सुग्रीवस्य कृतं नरेन्द्रतनये ! राज्यं हरीणां ततः ।
राज्ञा त्वद्विचयाय चापि हरयः सर्वा दिशः प्रेषिता-
स्तेषामस्म्यहमद्य गृध्रवचनात् त्वां देवि ! सम्प्राप्तवान् ॥ २२ ॥

अपि च, ईदृशमिव ।

**सीता** — (क) अहो अअरुणा क्खु इस्सरा एव्वं सोअन्तं अय्यउत्तं करअन्तो ।

**हनूमान्** — भवति ! मा विषादेन । रामो हि,

प्रगृहीतमहाचापो वृतो वानरसेनया ।
समुद्धर्तुं दशग्रीवं लङ्कामेवाभियास्यति ॥ २३ ॥

**सीता** — (ख) किण्णुखु सिविणो मए दिट्ठो[2] । भद्द ! अवि सच्चं । ण आणामि ।

**हनूमान्** — [(स्वगतम्)] भोः ! कष्टम् ।

दोलायत इव मे हृदयम् । भद्र ! कथं युष्माभिरार्यपुत्रस्य संगमो जातः ।

(क) अहो अकरुणाः खल्वीश्वरा एवं शोचन्तमार्यपुत्रं कुर्वन्तः ।

(ख) किन्नुखलु स्वप्नो मया दृष्टः । भद्र ! अपि सत्यम् । न जानामि ।

१. 'द् भामिनि ! म्' क. ख. घ. ङ. पाठः. २. 'ट्ठो । अ' क. ख. ङ. पाठः.

एवं गाढं परिज्ञाय भर्तारं भर्तृवत्सला ।
न †प्रत्यायति शोकार्ता यथा देहान्तरं गता ॥ २४ ॥

(प्रकाशम्) भवति! अयमिदानीं,

समुदितवरचापबाणपाणिं
पतिमिह राजसुते! तवानयामि ।
भव हि[1] विगतसंशया मयि त्वं
नरवरपार्श्वगता विनीतशोका ॥ २५ ॥

**सीता** — (क) भद्द! एदं मे अवत्थं सुणिअ अय्यउत्तो जह सोअपरवसो ण होइ, तह मे उत्तन्तं भणेहि ।

**हनूमान्** — यदाज्ञापयति भवती[2] ।

**सीता** — (ख) गच्छ, कय्यसिद्धी होदु ।

**हनूमान्** — अनुगृहीतोऽस्मि । (परिक्रम्य) कथमिदानीं ममागमनं रावणाय निवेदयामि । भवतु, दृष्टम् ।

(क) भद्र! एतां मेऽवस्थां श्रुत्वार्यपुत्रो यथा शोकपरवशो न भवति, तथा मे वृत्तान्तं भण ।

(ख) गच्छ कार्यसिद्धिर्भवतु ।

१. 'गि' क., 'ति' घ. ङ. पाठः. २. 'ती । साधयतु मां भवती । सी' क. पाठः

† प्रत्यायतीति प्रत्याङ्पूर्वोऽयतिः प्रत्येतीत्यर्थे द्रष्टव्यः ।

परभृतगणजुष्टं पद्मषण्डाभिरामं
　　सुरुचिरतरुषण्डं तोयदाभं त्रिकूटम् ।
करचरणविमर्दैः काननं चूर्णयित्वा
　　विगतविषयदर्पं राक्षसेशं करोमि ॥ २५ ॥

(निष्क्रान्तौ)

द्वितीयोऽङ्कः ।

---

## अथ तृतीयोऽङ्कः ।

(ततः प्रविशति शङ्कुकर्णः)

**शङ्कुकर्णः** — क इह भोः! काञ्चनतोरणद्वारमशून्यं कुरुते ।

(प्रविश्य)

**प्रतिहारी** — (क) अय्य! अहं विजआ । किं करीअदु ।

**शङ्कुकर्णः** — विजये! निवेद्यतां निवेद्यतां महाराजाय लङ्केश्वराय — भग्नप्रायाशोकवनिकेति । कुतः ;

यस्यां न प्रियमण्डनापि महिषी देवस्य मण्डोदरी
स्नेहाल्लुम्पति पल्लवान्न च पुनर्वीजन्ति* यस्यां भयात् ।
वीजन्तो मलयानिला अपि करैरस्पृष्टबालद्रुमा
सेयं शक्ररिपोरशोकवनिका भग्नेति विज्ञाप्यताम् ॥ १ ॥

**प्रतिहारी** — (ख) अय्य! णिच्चं भट्टिपादमूले वत्तमाणस्स जणस्स अदिट्ठपुरुव्वो अअं सम्भमो । किं एदं ।

---

(क) आर्य! अहं विजया । किं क्रियताम् ।

(ख) आर्य! नित्यं भर्तृपादमूले वर्तमानस्य जनस्यादृष्टपूर्वोऽयं संभ्रमः । किमेतद् ।

* इह पचाद्यजन्ताद् वीजशब्दादाचारक्विपं कृत्वा पाणिनीयाः परितुष्यन्तु ।

शङ्कुकर्णः[1] — भवति! अतिपाति कार्यमिदम्। शीघ्रं निवेद्यतां निवेद्यताम्।

प्रतिहारी — (क) अय्य! इयं णिवेदेमि। (निष्क्रान्ता)

शङ्कुकर्णः[2] — (पुरतो विलोक्य) अये अयं महाराजो लङ्केश्वर इत एवाभिवर्तते। य एषः,

अमलकमलसन्निभोग्रनेत्रः
कनकमयोज्ज्वलदीपिकापुरोगः।
त्वरितमभिपतत्यसौ सरोषो
युगपरिणामसमुद्यतो यथार्कः॥ २॥

(ततः प्रविशति यथानिर्दिष्टो रावणः)

रावणः —

कथं कथं भो नववाक्यवादि-
ञ्छृणोमि शीघ्रं वद केन चाद्य।
मुमूर्षुणा मुक्तभयेन धृष्टं
वनाभिमर्दात् परिधर्षितोऽहम्॥ ३॥

शङ्कुकर्णः — (उपसृत्य) जयतु महाराजः। अविदितागमनेन केनचिद् वानरेण ससंरम्भमभिमृदिताशोकवनिका।

(क) आर्य! इयं निवेदयामि।

१. 'र्णः। अ' ख. पाठः. २. 'र्णः। अये' घ. ङ. पाठः.

**रावणः** — (सावज्ञम्) कथं वानरेणेति । गच्छ, शीघ्रं निगृह्यानय ।

**शङ्कुकर्णः** — यदाज्ञापयति महाराजः । (निष्क्रान्तः)

**रावणः** — भवतु भवतु ।

युधि जगत्त्रयभीतिकृतोऽपि मे
यदि कृतं त्रिदशैरिदमप्रियम् ।
अनुभवन्त्वचिरादमृताशिनः
फलमतो निजशाठ्यसमुद्भवम् ॥ ४ ॥

(प्रविश्य)

**शङ्कुकर्णः** — जयतु महाराजः । महाराज! महाबलः खलु स वानरः । तेन खलु मृणालवदुत्पाटिताः सालवृक्षाः, मुष्टिना भग्नो दारुपर्वतकः, पाणितलाभ्यामभिमृदितानि लतागृहाणि, नादेनैव विसंज्ञीकृताः प्रमदवनपालाः । तस्य ग्रहणसमर्थं बलमाज्ञापयितुमर्हति महाराजः ।

**रावणः** — तेन हि[1] किङ्कराणां सहस्रं बलमाज्ञापय वानरग्रहणाय ।

**शङ्कुकर्णः** — यदाज्ञापयति महाराजः । (निष्क्रम्य प्रविश्य) जयतु महाराजः ।

१. 'हि अस्ति तु कि' ख. घ. पाठः,

अस्मदीयैर्महावृक्षैरस्मदीया महाबलाः ।
क्षिप्रमेव हतास्तेन किङ्करा द्रुमयोधिना ॥ ५ ॥

रावणः — कथं हता इति । तेन हि कुमारमक्षमाज्ञापय वानरग्रहणाय ।

शङ्कुकर्णः — यदाज्ञापयति महाराजः । (निष्क्रान्तः)[1]

रावणः — (विचिन्त्य)

कुमारो हि कृतास्त्रश्च शूरश्च बलवानपि ।
प्रसह्य चापि गृह्णीयाद्धन्याद् वा तं वनौकसम् ॥ ६ ॥

(प्रविश्य)

शङ्कुकर्णः — [2]अनन्तरीयं बलमाज्ञापयितुमर्हति महाराजः ।

रावणः — किमर्थम् ।

शङ्कुकर्णः — श्रोतुमर्हति महाराजः। कुमारं वानरमभिगच्छन्तं दृष्ट्वा महाराजेनानाज्ञापिता अप्यनुगताः पञ्च सेनापतयः ।

रावणः — ततस्ततः ।

शङ्कुकर्णः — ततस्तानभिद्रुतान् दृष्ट्वा किञ्चिद् भीत*

१. 'निष्क्रम्य प्रविश्य) आन' ङ. पाठः. २. 'आनन्तर्यं ब' ङ. च. पाठः.

* भीत इव भयादिव ।

इव तोरणमाश्रित्य काञ्चनपरिघमुद्यम्य निपातितास्तेन हरिणा पञ्च सेनापतयः।

रावणः — ततस्ततः।

शङ्कुकर्णः — ततः कुमारमक्षं,

क्रोधात् संरक्तनेत्रं त्वरिततरहयं स्यन्दनं वाहयन्तं
प्रावृट्कालाभ्रकल्पं परमलघुतरं बाणजालान् वमन्तम्।
तान् बाणान् निर्विधून्वन् कपिरपि सहसा तद्रथं लङ्घयित्वा
कण्ठे सङ्गृह्य धृष्टं मुदिततरमुखो मुष्टिना निर्जघान॥ ७॥

रावणः — (सरोषम्) आः, कथं कथं निर्जघानेति।

तिष्ठ त्वमहमेवैनमासाद्य कपिजन्तुकम्[3]।
एष भस्मीकरोम्यस्मत्क्रोधानलकणैः क्षणात्॥ ८॥

शङ्कुकर्णः — प्रसीदतु प्रसीदतु महाराजः। कुमारमक्षं निहतं श्रुत्वा क्रोधाविष्टहृदयः कुमारेन्द्रजिदभिगतवांस्तं वनौकसम्।

रावणः — तेन हि गच्छ। भूयो ज्ञायतां वृत्तान्तः।

शङ्कुकर्णः — यदाज्ञापयति महाराजः। (निष्क्रान्तः)

रावणः — कुमारो हि कृतास्त्रश्च,

१. 'रोषात्' च. पाठः. २. '(सक्रोधं) तिष्ठ' घ. ङ. पाठः. ३. 'कीटकम्' ङ. च. पाठः.

अवश्यं युधि वीराणां वधो वा विजयोऽथवा ।
तथापि क्षुद्रकर्मेदं *(मह्यमीषां मनोज्वरः?) ॥ ९ ॥

(प्रविश्य)

शङ्कुकर्णः — जयतु महाराजः । जयतु लङ्केश्वरः । जयतु भद्रमुखः ।

संवृत्तं तुमुलं युद्धं कुमारस्य च तस्य च ।
ततः स वानरः शीघ्रं बद्धः पाशेन साम्प्रतम् ॥ १० ॥

रावणः — कोऽत्र विस्मय इन्द्रजिता शाखामृगो बद्ध इति । कोऽत्र[1] भोः ! ।

(प्रविश्य)

राक्षसः — जयतु महाराजः ।

रावणः — गच्छ विभीषणस्तावदाहूयताम् ।

राक्षसः — यदाज्ञापयति महाराजः । (निष्क्रान्तः)

रावणः — त्वमपि तावद् वानरमानय ।

शङ्कुकर्णः — यदाज्ञापयति महाराजः (निष्क्रान्तः)

रावणः — (विचिन्त्य) भोः ! कष्टम् ।

अचिन्त्या मनसा लङ्का सहितैः सुरदानवैः ।
अभिभूय दशग्रीवं प्रविष्टः किल वानरः ॥ ११ ॥

१. 'त्र ।' क. ङ. पाठः.

* 'मह्यमीषन्मनोज्वरः' इति स्यात् ।

अपि च,

जित्वा त्रैलोक्यमाजौ ससुरदनुसुतं यन्मया गर्वितेन
क्रान्त्वा कैलासमीशं स्वगणपरिवृतं साकमाकम्प्य देव्या ।
लब्ध्वा तस्मात् प्रसादं पुनरगसुतया नन्दिनानादृतत्वाद्
दत्तं शप्तं च ताभ्यां यदि कपिविकृतिच्छद्मना तन्मम स्यात् ॥

(ततः प्रविशति विभीषणः)

**विभीषणः** — [1](सविमर्शम्) अहोतुखलु महाराजस्य विपरीता खलु बुद्धिः संवृत्ता । कुतः,

मयोक्तो मैथिलीं तस्मै बहुशो दीयतामिति ।
न[2] मे शृणोति वचनं सुहृदां शोककारणात् ॥ १३ ॥

(उपेत्य)

जयतु महाराजः ।

**रावणः** — विभीषण ! एह्येहि । उपविश ।

**विभीषणः** — एष एष उपविशामि । (उपविशति)

**रावणः** — विभीषण ! निर्विण्णमिव त्वां लक्षये ।

**विभीषणः** — निर्वेद एव खल्वनुक्तग्राहिणं स्वामिनमुपाश्रितस्य भृत्यजनस्य ।

१. 'सविस्मयम् । अहो म' ख., 'अहो' क. घ. ङ. पाठः. २. 'शृणोति मे न व' घ. पाठः.

**रावणः** — छिद्यतामेषा कथा । त्वमपि तावद् वानरमानय ।

**विभीषणः** —यदाज्ञापयति महाराजः । (निष्क्रान्तः)

(ततः प्रविशति राक्षसैर्गृहीतो हनूमान्)

**सर्वे** -- आः इत इतः ।

**हनूमान्** —

नैवाहं धर्षितस्तेन नैर्ऋतेन दुरात्मना ।
स्वयं ग्रहणमापन्नो राक्षसेशदिदृक्षया ॥ १४ ॥

(उपगम्य)

भो राजन्! अपि कुशली भवान् ।

**रावणः** — (सावज्ञम्) विभीषण! किमस्य तत् कर्म ।

**विभीषणः** -- महाराज! अतो[1]ऽप्यधिकम् ।

**रावणः** -- क[2]थं त्वमवगच्छसि ।

**विभीषणः** -- प्रष्टुमर्हति महाराजः कस्त्वमिति ।

**रावणः** -- भो वानर! कस्त्वम् । केन कारणेन धर्षितोऽस्माकमन्तःपुरं प्रविष्टः ।

**हनूमान्** — भोः! श्रूयताम् ,

१. 'तोऽपि चाधि' घ. पाठः. २. 'थं भवाञ्जानाति ।' च. पाठः.

अञ्जनायां समुत्पन्नो मारुतस्यौरसः सुतः ।
प्रेषितो राघवेणाहं हनूमान् नाम वानरः ॥ १५ ॥

**विभीषणः** — महाराज! किं श्रुतम् ।

**रावणः** — किं श्रुतेन ।

**विभीषणः** — हनूमन्! किमाह तत्रभवान् राघवः ।

**हनूमान्** — भोः! श्रूयतां रामशासनम् ।

**रावणः** — कथं कथं रामशासनमित्याह । आः हन्यतामयं वानरः ।

**विभीषणः** — प्रसीदतु प्रसीदतु महाराजः । सर्वापराधेष्ववध्याः खलु दूताः । अथवा रामस्य वचनं श्रुत्वा पश्चाद् यथेष्टं कर्तुमर्हति महाराजः ।

**रावणः** — भो वानर! किमाह स मानुषः ।

**हनूमान्** — भोः! श्रूयतां,

वरशरणमुपेहि शङ्करं वा
प्रविश च दुर्गतमं रसातलं वा ।
शरवरपरिभिन्नसर्वगात्रं
यमसदनं प्रतियापयाम्यहं त्वाम् ॥ १६ ॥

इति ।

**रावणः** — ह ह ह ।

दिव्यास्त्रैस्त्रिदशगणा मयाभिभूता
दैत्येन्द्रा मम वशवर्तिनः समस्ताः ।
पौलस्त्योऽप्यपहृतपुष्पकोऽत्रसन्नो
भो! रामः कथमभियाति मानुषो माम् ॥ १७ ॥

**हनूमान्** — एवंविधेन भवता किमर्थं प्रच्छन्नं तस्य दारापहरणं कृतम् ।

**विभीषणः** — सम्यगाह हनूमान् ।

अपास्य मायया रामं त्वया राक्षसपुङ्गव! ।
भिक्षुवेषं समास्थायच्छलेनापहृता हि सा ॥ १८ ॥

**रावणः** — विभीषण! किं विपक्षपक्षमवलम्बसे ।

**विभीषणः** —

प्रसीद राजन्! वचनं हितं मे
प्रदीयतां राघवधर्मपत्नी ।
इदं कुलं राक्षसपुङ्गवेन
त्वया हि नेच्छामि विपद्यमानम् ॥ १९ ॥

**रावणः** — विभीषण! अलमलं भयेन ।

कथं लम्बसटः सिंहो मृगेण विनिपात्यते ।
गजो वा सुमहान् मत्तः सृगालेन निहन्यते ॥ २० ॥

**हनूमान्** — भो रावण! विपद्यमानभाग्येन भवता किं युक्तं राघवमेवं वक्तुम्। मा तावद् भोः!

नक्तञ्चरापशद! रावण! राघवं तं
वीराग्रगण्यमतुलं त्रिदशेन्द्रकल्पम्।
प्रक्षीणपुण्य! भवता भुवनैकनाथं
वक्तुं किमेवमुचितं गतसार! नीचैः॥ २१ ॥

**रावणः** — कथं कथं नामाभिधत्ते। हन्यतामयं वानरः। अथवा दूतवधः खलु वचनीयः। शङ्कुकर्ण! लाङ्गूलमादीप्य विसृज्यतामयं वानरः।

**शङ्कुकर्णः** — यदाज्ञापयति महाराजः। इत इतः।

**रावणः** — अथवा एहि तावत्।

**हनूमान्** — अयमस्मि।

**रावणः** — अभिधीयतां मद्वचनात् स[1] मानुषः।

अभिभूतो मया राम! दारापहरणादसि।
यदि तेऽस्ति धनुःश्लाघा दीयतां मे रणो महान्॥ २२॥

**हनूमान्** — अचिराद् द्रक्ष्यसि,

अभिहतवरवप्रगोपुराट्टां
रघुवरकार्मुकनादनिर्जितस्त्वम्।

१. 'स रामः' ख. घ. ङ. पाठः.

हरिगणपरिपीडितैः समन्तात्
प्रमदवनैरभिसंवृतां स्वलङ्काम् ॥ २३ ॥

**रावणः** — आः निर्वास्यतामयं वानरः ।

**राक्षसाः** — इत इतः ।

(रक्षोभिः सह निष्क्रान्तो हनूमान्)

**विभीषणः** — प्रसीदतु प्रसीदतु महाराजः। अस्ति काचिद् विवक्षा महाराजस्य हितमन्तरेण ।

**रावणः** — उच्यतां, तच्छ्रेयो वयमपि श्रोतारः।

**विभीषणः** — सर्वथा राक्षसकुलस्य विनाशोऽभ्यागत इति मन्ये ।

**रावणः** — केन कारणेन ।

**विभीषणः** — महाराजस्य विप्रतिपत्त्या।

**रावणः** — का मे विप्रतिपत्तिः ।

**विभीषणः** — ननु सीतापहरणमेव ।

**रावणः** — सीतापहरणेन को दोषः स्यात्।

**विभीषणः** — अधर्मश्च ।

**रावणः** — चशब्देन सावशेषमिव ते वचनम। तद् ब्रूहि।

**विभीषणः** — तदेव ननु ।

**रावणः** — विभीषण! किं गूहसे । मम खलु प्राणैः शा-

पितः स्याः, यदि सत्यं न ब्रूयाः ।

**विभीषणः** — अभयं दातुमर्हति महाराजः ।

**रावणः** — दत्तमभयम् । उच्यताम् ।

**विभीषणः** — बलवद्विग्रहश्च ।

**रावणः** — (सरोषम्) कथं कथं बलवद्विग्रहो नाम ।

शत्रुपक्षमुपाश्रित्य मामयं राक्षसाधमः ।
क्रोधमाहारयंस्तीव्रमभीरुरभिभाषते ॥ २४ ॥

कोऽत्र ।

ममानवेक्ष्य सौभ्रात्रं शत्रुपक्षमुपाश्रितम् ।
नोत्सहे पुरतो द्रष्टुं तस्मादेष निरस्यताम् ॥ २५ ॥

**विभीषणः** — प्रसीदतु प्रसीदतु महाराजः । अहमेव यास्यामि ।

शासितोऽहं त्वया राजन्! प्रयामि न च दोषवान् ।
त्यक्त्वा रोषं च कामं च यथा कार्यं तथा कुरु ॥ २६ ॥

(परिक्रम्य) अयमिदानीम्—

अद्यैव तं कमललोचनमुग्रचापं
रामं हि रावणवधाय कृतप्रतिज्ञम् ।

संश्रित्य संश्रितहितप्रथितं नृदेवं
नष्टं निशाचरकुलं पुनरुद्धरिष्ये ॥ २७ ॥

(निष्क्रान्तः)

**रावणः** — हन्त निर्गतो विभीषणः । यावदहमपि नगररक्षां सम्पादयामि । (निष्क्रान्तः)

तृतीयोऽङ्कः ।

---

## अथ चतुर्थोऽङ्कः ।

(ततः प्रविशति[1] वानरकाञ्चुकीयः)

काञ्चुकीयः — भो भो बलाध्यक्ष ! सन्नाहमाज्ञापय वानरवाहिनीम् ।

(प्रविश्य)

बलाध्यक्षः — आर्य ! किंकृतोऽयं समुद्योगः ।

काञ्चुकीयः — तत्रभवता हनूमतानीतः खल्वार्यरामस्य देव्याः सीताया वृत्तान्तः ।

बलाध्यक्षः — किमिति किमिति ।

काञ्चुकीयः — श्रूयतां,

लङ्कायां किल वर्तते नृपसुता शोकाभिभूता भृशं
पौलस्त्येन विहाय धर्मसमयं संक्लिश्यमाना ततः ।
श्रुत्वैतद् भृशशोकतप्तमनसो रामस्य कार्यार्थिना
राज्ञा वानरवाहिनी प्रतिभया सन्नाहमाज्ञापिता ॥ १ ॥

बलाध्यक्षः — एवम् । यदाज्ञापयति महाराजः ।

काञ्चुकीयः — यावदहमपि सन्नद्धा वानरवाहिनीति महाराजाय निवेदयामि ।

(निष्क्रान्तौ)

विष्कम्भकः ।

---

१. 'ति का' क. ख. घ. ङ. च. पाठः.

(ततः प्रविशति रामो लक्ष्मणः[1] सुग्रीवो हनुमांश्च)

**रामः —**

आक्रान्ताः पृथुसानुकुञ्जगहना मेघोपमाः पर्वताः
सिंहव्याघ्रगजेन्द्रपीतसलिला नद्यश्च तीर्णा मया ।
क्रान्तं पुष्पफलाढ्यपादपयुतं चित्रं महत् काननं
सम्प्राप्तोऽस्मि कपीन्द्रसैन्यसहितो वेलातटं साम्प्रतम् ॥ २ ॥

**लक्ष्मणः —** एष एष भगवान् वरुणः,

सजलजलधरेन्द्रनीलनीरो
विलुलितफेनतरङ्गचारुहारः[2] ।
समधिगतनदीसहस्रबाहु-
र्हरिरिव भाति सरित्पतिः शयानः ॥ ३ ॥

**रामः —** कथं कथं भोः !

रिपुमुद्धर्तुमुद्यन्तं मामयं सक्तसायकम् ।
सजीवमद्य तं कर्तुं निवारयति सागरः ॥ ४ ॥

**सुग्रीवः —** अये वियति,

सजलजलदसन्निभप्रकाशः
कनकमयामलभूषणोज्ज्वलाङ्गः ।
अभिपतति कुतो नु राक्षसोऽसौ
शलभ इवाशु हुताशनं प्रवेष्टुम् ॥ ५ ॥

१. 'णसुग्रीवहनुमद्भिः सह)' ङ. पाठः.　　२. 'हासः ।' घ. पाठः.

**हनूमान्** — भो भो वानरवीराः! अप्रमत्ता भवन्तु भवन्तः।

शैलैर्द्रुमैः सम्प्रति मुष्टिबन्धै-
र्दन्तैर्नखैर्जानुभिरुग्रनादैः।
रक्षोवधार्थं युधि वानरेन्द्रा-
स्तिष्ठन्तु रक्षन्तु च नो नरेन्द्रम्॥ ६॥

**रामः** — राक्षस इति। हनूमन्! अलमलं सम्भ्रमेण।

**हनूमान्** — यदाज्ञापयति देवः।

(ततः प्रविशति विभीषणः)

**विभीषणः** — भोः! प्राप्तोऽस्मि राघवस्य शिबिरसन्निवेशम्। (विचिन्त्य) अकृतदूतसम्प्रेषणमाविदितागमनममित्रसम्बन्धिनं कथंनुखलु मामवगच्छेत् तत्रभवान् राघवः। कुतः[1],

क्रुद्धस्य यस्य पुरतः सहितोऽप्यशक्तः
स्थातुं सुरैः सुररिपोर्युधि वज्रपाणिः।
तस्यानुजं रघुपतिः शरणागतं मां
किं वक्ष्यतीति हृदयं परिशङ्कितं मे॥ ७॥

अथवा,

दृष्टधर्मार्थतत्त्वोऽयं साधुः संश्रितवत्सलः।
शङ्कनीयः कथं रामो विशुद्धमनसा मया॥ ८॥

१. 'अपिच, कु' ख. पाठः.

(अधोऽवलोक्य) इदं रघुकुलवृषभस्य स्कन्धावारम् । यावदवतरामि । (अवतीर्य) हन्त इह स्थित्वा ममागमनं देवाय निवेदयामि ।

**हनूमान्** — (ऊर्ध्वमवलोक्य) अये कथं तत्रभवान् विभीषणः ।

**विभीषणः** — अये हनूमान् । हनूमन्! ममागमनं देवाय निवेदय ।

**हनूमान्** — बाढम् । (उपगम्य) जयतु जयतु देवः ।

राजंस्त्वत्कारणादेव भ्रात्रा निर्विषयीकृतः ।
विभीषणोऽयं धर्मात्मा शरणार्थमुपागतः ॥ ९ ॥

**रामः** — कथं विभीषणः शरणागत इति । वत्स लक्ष्मण! गच्छ, सत्कृत्य प्रवेश्यतां विभीषणः ।

**लक्ष्मणः** — यदाज्ञापयत्यार्यः ।

**रामः** — सुग्रीव! वक्तुकाममिव त्वां लक्षये ।

**सुग्रीवः** — देव! बहुमायाश्छलयोधिनश्च राक्षसाः । तस्मात् सम्प्रधार्य प्रवेश्यतां विभीषणः ।

**हनूमान्** — महाराज! मा मैवं,

देवे यथा वयं भक्तास्तथा मन्ये विभीषणम् ।
भ्रात्रा विवदमानोऽपि दृष्टः पूर्वं पुरे मया ॥ १० ॥

१. 'तरति)' ख. पाठः.

रामः — यद्येवं[1], गच्छ, सत्कृत्य प्रवेश्यतां विभीषणः।

लक्ष्मणः — यदाज्ञापयत्यार्यः। (परिक्रम्य) अये विभीषणः[3]। विभीषण! अपि कुशली भवान्।

विभीषणः — अये[4] कुमारो लक्ष्मणः। कुमार! अद्य कुशली संवृत्तोऽस्मि।

लक्ष्मणः — विभीषण! उपसर्पावस्तावदार्यम्।

विभीषणः — बाढम्।

(उपसर्पतः[5])

लक्ष्मणः — जयत्वार्यः।

विभीषणः — प्रसीदतु देवः। जयतु देवः।

रामः — अये विभीषणः। विभीषण! अपि कुशली भवान्।

विभीषणः — देव! अद्य कुशली संवृत्तोऽस्मि।

भवन्तं पद्मपत्राक्षं शरण्यं शरणागतः।
अद्यास्मि कुशली राजंस्त्वद्दर्शनविकल्मषः॥ ११॥

रामः — अद्यप्रभृति[6] मद्वचनाल्लङ्केश्वरो भव।

विभीषणः — अनुगृहीतोऽस्मि।

१. 'वं तेन हि ग' क. पाठः. २. '(उपसृत्य) अ' ख. घ. ङ. पाठः. ३. 'णः। अपि' ख. पाठः. ४. 'कुमार! अद्य' ख. घ. ङ. पाठः. ५. '(उभावुपसृत्य)' ख. घ. ङ. पाठः. ६. 'ति ल' ख. ङ. पाठः.

**रामः**— विभीषण! त्वदागमनादेव सिद्धमस्मत्कार्यम्। सागरतरणे खलूपायो नाधिगम्यते।

**विभीषणः**— देव! किमत्रावगन्तव्यम्। यदि मार्गं न ददाति, समुद्रे दिव्यमस्त्रं तावद् विस्रष्टुमर्हति देवः।

**रामः**— साधु विभीषण! साधु। भवतु, एवं तावत् करिष्ये[1]। (सहसोत्तिष्ठन् सरोषम्)

मम शरपरिदग्धतोयपङ्कं
हतशतमत्स्यविकीर्णभूमिभागम्।
यदि मम न ददाति मार्गमेनं
प्रतिहतवीचिरवं करोमि शीघ्रम्॥ १२॥

(ततः प्रविशति वरुणः)

**वरुणः**— (ससम्भ्रमम्)

नारायणस्य नररूपमुपाश्रितस्य
कार्यार्थमभ्युपगतस्य कृतापराधः।
देवस्य देवरिपुदेहहरात् प्रतूर्णं
भीतः शराच्छरणमेनमुपाश्रयामि॥ १३॥

(विलोक्य) अये अयं भगवान्,

मानुषं रूपमास्थाय चक्रशार्ङ्गगदाधरः।
स्वयं कारणभूतः सन् कार्यार्थी समुपागतः[2]॥ १४॥

१. 'ष्ये। मम' क. ख. घ. ङ. पाठः. २. 'तः। लक्ष्म' ख. घ. ङ. पाठः.

नमो भगवते त्रैलोक्यकारणाय नारायणाय ।

**लक्ष्मणः** — (विलोक्य) अये कोनुखल्वेषः ।

मणिविरचितमौलिश्चारुताम्रायताक्षो
नवकुवलयनीलो मत्तमातङ्गलीलः ।
सलिलनिचयमध्यादुत्थितस्त्वेष शीघ्र-
मवनतमिव कुर्वंस्तेजसा जीवलोकम् ॥ १५ ॥

**विभीषणः** — देव ! अयं खलु भगवान् वरुणः प्राप्तः ।

**रामः** — किं वरुणोऽयम् । भगवन् ! वरुण ! नमस्ते ।

**वरुणः** — न मे नमस्कारं कर्तुमर्हति देवेशः । अथवा,

राजपुत्र ! कुतः कोपो रोषेण किमलं तव ।
कर्तव्यं तावदस्माभिर्वद शीघ्रं नरोत्तम ! ॥ १६ ॥

**रामः** — लङ्कागमने मार्गं दातुमर्हति भवान् ।

**वरुणः** — एष मार्गः । प्रयातु भवान् । (अन्तर्हितः)

**रामः** — कथमन्तर्हितो भगवान् वरुणः । विभीषण ! पश्य पश्य भगवत्प्रसादान्निष्कम्पवीचिमन्तं सलिलाधिपतिम् ।

**विभीषणः** — देव ! साम्प्रतं द्विधाभूत इव दृश्यते जलनिधिः ।

**रामः** — क्व हनूमान् ।

**हनूमान्** — जयतु देवः ।

**रामः** — हनूमन्! गच्छाग्रतः ।

**हनूमान्** — यदाज्ञापयति देवः ।

(सर्वे परिक्रामन्ति)

**रामः** — (विलोक्य सविस्मयम्) वत्स लक्ष्मण! वयस्य विभीषण! महाराज सुग्रीव! सखे हनूमन्! पश्यन्तु पश्यन्तु भवन्तः। अहो विचित्रता सागरस्य । इह हि,

क्वचित् फेनोद्गारी क्वचिदपि च मीनाकुलजलः
क्वचिच्छङ्खाकीर्णः क्वचिदपि च नीलाम्बुदनिभः[1] ।
क्वचिद् वीचीमालः क्वचिदपि च नक्रप्रतिभयः[2]
क्वचिद् भीमावर्तः क्वचिदपि च निष्कम्पसलिलः ॥१७॥

भगवत्प्रसादादतीतः सागरः ।

**हनूमान्** — देव! इयमियं लङ्का ।

**रामः** — (चिरं विलोक्य) अहो राक्षसनगरस्य[3] श्रीरचिराद् विपत्स्यते ।

मम शरवरवातपातभग्ना
कपिवरसैन्यतरङ्गताडितान्ता ।
उदधिजलगतेव नौर्विपन्ना
निपतति रावणकर्णधारदोषात् ॥ १८ ॥

---

१. 'नक्रप्रतिभयः' ख. घ. ङ. पाठः. २. 'नीलाम्बुदनिभः' ख. घ. ङ. पाठः.
३. 'स्य परा लक्ष्मीर' ङ. पाठः.

सुग्रीव! अस्मिन् सुवेलपर्वते क्रियतां सेनानिवेशः। (उपविशति)

सुग्रीवः— यदाज्ञापयति[1] देवः। नील! एवं क्रियताम्

(प्रविश्य)

नीलः— यदाज्ञापयति महाराजः। (निष्क्रम्य प्रविश्य) जयतु देवः। क्रमान्निवेश्यमानासु सेनासु बृन्दपरिग्रहेषु परीक्ष्यमाणेषु पुस्तकप्रामाण्यात् कुतश्चिदप्यविज्ञायमानौ द्वौ वनौकसौ गृहीतौ। वयं न जानीमः कर्तव्यम्। देवस्तस्मात्[2] प्रमाणम्।

रामः— शीघ्रं प्रवेशयत्वेतौ।

नीलः— यदाज्ञापयति देवः। (निष्क्रान्तः)

(ततः प्रविशति नीलो वानरैर्गृह्यमाणौ वानररूपधारिणौ[3] सम्पुटिकाहस्तौ शुकसारणौ च)

वानराः— (क) अह्मो भण(थ?ह के) तुह्मे भण(थ?ह)।

उभौ— (ख) भट्टा! अह्मे अय्यकुमुदस्स सेवआ (‡वान-भट्टा?)

वानराः— (ग) भट्टा! अय्यकुमुदस्स सेवअत्ति अत्ताणं अवदिसन्ति।

(क) अहो भणतं कौ युवां भणतम्।

(ख) भर्तः! आवामार्यकुमुदस्य सेवकौ।

(ग) भर्तः! आर्यकुमुदस्य सेवकावित्यात्मानमपदिशतः।

१. 'ति महाराजः।' घ. पाठः. २. 'तस्माद्देव एव प्र' क. ख. घ. पाठः. ३. 'णौ शु' क. ख. घ. ङ. पाठः.

‡ 'वाण(र)भट्टा!' इति संबोधनं वा स्यात्।

**विभीषणः —** (सावधानं शुकसारणौ विलोक्य)

स्वसैनिकौ न चाप्येतौ न चाप्येतौ वनौकसौ ।
प्रेषितौ रावणेनैतौ राक्षसौ शुकसारणौ ॥ १९ ॥

**उभौ —** (आत्मगतम्) हन्त कुमारेण विज्ञातौ स्वः । (प्रकाशम्) आर्य! आवां खलु राक्षसराजस्य विप्रतिपत्त्या विपद्यमानं राक्षसकुलं दृष्ट्वास्पदमलभमानौ आर्यसंश्रयार्थं वानररूपेण सम्प्राप्तौ ।

**रामः —** वयस्य! विभीषण! कथमिव भवान्[1] मन्यते ।

**विभीषणः —** देव!

एतौ हि राक्षसेन्द्रस्य सम्मतौ मन्त्रिणौ नृप! ।
प्राणान्तिकेऽपि व्यसने लङ्केशं नैव मुञ्चतः ॥ २० ॥

तस्माद् यथार्हं दण्डमाज्ञापयतु[2] देवः ।

**रामः —** विभीषण! मा मैवम् ।

अनयोः शासनादेव न मे वृद्धिर्भविष्यति ।
क्षयो वा राक्षसेन्द्रस्य तस्मादेतौ विमोचय ॥ २१ ॥

**लक्ष्मणः —** यदि विमुञ्चेत्, सर्वस्कन्धावारं प्रविश्य प-

१. 'वांस्तर्कयति ।' क. ख. पाठः. २. 'यितुमर्हति महाराजः ।' क. ख. घ. पाठः.

रीक्ष्य पुनर्मोक्षमाज्ञापयत्वार्यः ।

रामः — सम्यगभिहितं लक्ष्मणेन। नील! एवं क्रियताम् ।

नीलः — यदाज्ञापयति देवः ।

रामः — अथवा[$] एहि तावत् ।

उभौ — इमौ स्वः ।

रामः — अभिधीयतां मद्वचनात् स राक्षसेन्द्रः ।

मम दारापहारेण स्वयङ्गाहितविग्रहः ।
आगतोऽहं न पश्यामि[*] द्रष्टुकामो रणातिथिः ॥ २२ ॥

इति ।

उभौ — यदाज्ञापयति देवः । (निष्क्रान्तौ)

रामः — विभीषण! वयमपि तावदानन्तरीयं[1] बलं परीक्षिष्यामहे ।

विभीषणः — यदाज्ञापयति देवः ।

रामः — (परिक्रम्य विलोक्य) अये अस्तमितो भगवान् दिवाकरः । [2]सम्प्रति हि,

१. 'यं ब' क. घ. ग. ङ. पाठः. २. 'कुतः, अ' घ. पाठः.

$ अन्यतराह्वानाभिप्रायमेकवचनम् । * अर्थात् त्वामिति गम्यम् ।

अस्ताद्रिमस्तकगतः प्रतिसंहृतांशुः
सन्ध्यानुरञ्जितवपुः प्रतिभाति सूर्यः ।
रक्तोज्ज्वलांशुकवृते द्विरदस्य कुम्भे
जाम्बूनदेन रचितः पुलको यथैव ॥ २३ ॥

(निष्क्रान्ताः सर्वे)

चतुर्थोऽङ्कः ।

---

१. 'त्पलां' ग. पाठः.

## अथ पञ्चमोऽङ्कः ।

(ततः प्रविशति राक्षसकाञ्चुकीयः)

राक्षसकाञ्चुकीयः — क इह भोः ! प्रवालतोरणद्वारमशून्यं कुरुते ।

(प्रविश्यान्यो राक्षसः)

राक्षसः — आर्य! अयमस्मि । किं क्रियताम् ।

काञ्चुकीयः — गच्छ, महाराजस्य शासनाद्[1] विद्युज्जिह्वस्तावदाहूयताम् ।

राक्षसः — आर्य! तथा । (निष्क्रान्तः)

काञ्चुकीयः — अहोतुखलु विपद्यमानाभ्युदये राक्षसकुले[2] विपन्नसर्वसाधनस्य निहतवीरपुरुषस्य स्वयं च प्राणसंशयं प्राप्तस्येदानीमपि प्रसन्नत्वं नोपगच्छति महाराजस्य बुद्धिः । को हि नाम[3],

चलत्तरङ्गाहतभीमवेल-
मुदीर्णनक्राकुलनीलनीरम् ।
समुद्रमाक्रान्तमवेक्ष्य तस्मै
दारप्रदानान्न करोति शान्तिम् ॥ १ ॥

---

१. 'वचना' ग. घ. पाठः. २. 'सराजकु' क. ग. घ. पाठः. ३. 'खलु, च' ग. पाठः.

अपि च,

प्रहस्तप्रमुखा वीराः कुम्भकर्णपुरस्सराः ।
निहता राघवेणाद्य शक्रजिच्चापि निर्गतः ॥ २ ॥

एवमपि गते,

मदन[1]वशगतो महानयार्थं सचिववचोऽप्यनवेक्ष्य वीरमानी ।
रघुकुलवृषभस्य तस्य देवीं जनकसुतां न ददाति योद्धुकामः ॥

(प्रविश्य)

विद्युज्जिह्वः — अपि सुखमार्यस्य ।

काञ्चुकीयः — विद्युज्जिह्व! गच्छ, महाराज[2]वचनाद् रामलक्ष्मणयोः शिरःप्रतिकृतिरानीयताम् ।

विद्युज्जिह्वः — यदाज्ञापयति महाराजः । (निष्क्रान्तः)

काञ्चुकीयः — यावदहमपि महाराजस्य प्रत्यन्तरीभविष्यामि । (निष्क्रान्तः)

विष्कम्भकः ।

---

(ततः प्रविशति राक्षसीगणपरिवृता सीता)

सीता — (क) किण्णुहु अय्यउत्तस्स आगमणेण पह-

---

(क) किन्नुखल्वार्यपुत्रस्यागमनेन प्रह्लादितस्य हृदयस्याद्यावेग इव संवृत्तः । अ-

१. 'परवशो म' ख. पाठः. २. 'स्य शासना' क. ख. पाठः.

ळादिअस्स हिअअस्स अज्ज आवेओ विअ संवुत्तो । अणि-ट्ठाणि णिमित्ताणि अ दिस्सन्ति । एवं वि दाणि[1] (अच्चाहिअं?) हिअअस्स महन्तो अब्भुदओ वड्ढइ । सव्वहा इस्सरा सन्तिं करन्तु ।

(ततः प्रविशति रावणः)

**रावणः** — मा तावद्,

एषा विहाय भवनं मम सम्प्रयाता
नारी नवामलजलोज्ज्वलभ्रहस्ता ।
लङ्का यदा हि समरे वशमागता मे
पौलस्त्यमाशु परिजित्य तदा गृहीता ॥ ४ ॥

भवति ! तिष्ठ तिष्ठ । न खलु न खलु गन्तव्यम् । किं ब्रवीषि—उत्सृज्य त्वां राममुपगच्छामीति । आः अ-पध्वंस ।

बलादेव गृहीतासि तदा वैश्रवणालये ।
बलादेव ग्रहीष्ये त्वां हत्वा राघवमाहवे ॥ ५ ॥

किमनया । यावदहमपि सीतां विलोभयिष्ये । (मदनावेशं

निष्टानि निमित्तानि च दृश्यन्ते । एवमपीदानीं हृदयस्य महानभ्युदयो वर्धते सर्वथेश्वराः शान्तिं कुर्वन्तु ।

१. 'व' ख. पाठः.

निरूप्य) अहोतुखल्वतुलबलता कुसुमधन्वनः । कुतः,

निद्रां मे निशि विस्मरन्ति[1] नयनान्यालोक्य सीताननं
तत्संश्लेषसुखार्थिनी तनुतरा याता तनुः पाण्डुताम् ।
सन्तापं रमणीयवस्तुविषये बध्नाति पुष्पेषुणा
कष्टं निर्जितविष्टपत्रयभुजो निर्जीयते रावणः ॥ ६ ॥

(उपेत्य)

सीते! त्यज त्वमरविन्दपलाशनेत्रे[2]!
चित्तं हि मानुषगतं मम चित्तनाथे! ।
शस्त्रेण मेऽद्य समरे विनिपात्यमानं
प्रेक्षस्व लक्ष्मणयुतं तव चित्तकान्तम् ॥ ७ ॥

**सीता** — (क) हं मूढो खु सि रावणओ, जो मन्दरं हत्थेण तुळयिदुकामो।

(प्रविश्य)

**राक्षसः**[3] — जयतु महाराजः ।

एते तयोर्मानुषयोः शिरसी राजपुत्रयोः ।
युधि हत्वा कुमारेण गृहीते त्वत्प्रियार्थिना ॥ ८ ॥

**रावणः** — सीते ! पश्य पश्य तयोर्मानुषयोः शिरसी ।

(क) हं मूढः खल्वसि रावणकः, यो मन्दरं हस्तेन तुलयितुकामः

१. 'न' घ. पाठः. २. 'विशालने' ग. पाठः. ३. 'काञ्चुकीयः ज' घ. पाठः.

**सीता** — (क) हा अय्यउत्त !। (इति मूर्छिता पतति)

**रावणः** —

सीते! भावं परित्यज्य मानुषेऽस्मिन् गतायुषि ।
अद्यैव त्वं विशालाक्षि! महतीं श्रियमाप्नुहि ॥ ९ ॥

**सीता** — (प्रत्यभिज्ञाय) (ख) हा अय्यउत्त! परिमळणवकमळसण्णिहे वदणे परिवुत्तणअणे पेक्खन्ती अदिधीरा खु ह्मि मन्दभाआ। हा अय्यउत्त! एदस्सिं दुःखसाअरे मं णिक्खिविअ कहिं गदो सि। जाव ण मरामि । किंणुखु अळिअं एदं भवे। भद्द! जेण असिणा अय्यउत्तस्स असदिसं किदं, तेण मं वि मारेहि।

**रावणः** —

व्यक्तमिन्द्रजिता युद्धे हते तस्मिन् नराधमे।
लक्ष्मणेन सह भ्रात्रा केन त्वं मोक्षयिष्यसे ॥ १० ॥

(नेपथ्ये)

रामेण रामेण ।

**सीता** — चिरं जीव ।

(क) हा आर्यपुत्र

(ख) हा आर्यपुत्र! परिमलनवकमलसन्निभे वदने परिवृत्तनयने पश्यन्ती अतिधीरा खल्वस्मि मन्दभागा । हा आर्यपुत्र! एतस्मिन् दुःखसागरे मां निक्षिप्य कुत्र गतोऽसि। यावन्न म्रिये। किन्नुखल्वलीकमेतद् भवेत् । भद्र ! येनासिनार्यपुत्रस्यासदृशं कृतं तेन मामपि मारय ।

(प्रविश्य)

**राक्षसः** — (ससम्भ्रमम्) रामेण रामेण ।

**रावणः** — कथं कथं रामेणेति ।

**राक्षसः** — प्रसीदतु प्रसीदतु महाराजः । अतिपातिवृत्तान्तनिवेदनत्वरयावस्थान्तरं नावेक्षितम् ।

**रावणः** — ब्रूहि ब्रूहि । किं कृतं मनुजतापसेन ।

**राक्षसः** — श्रोतुमर्हति महाराजः । तेन खलु,

उदीर्णसत्त्वेन महाबलेन लङ्केश्वरं त्वामभिभूय शीघ्रम् ।
सलक्ष्मणेनाद्य हि राघवेण प्रसह्य युद्धे निहतः सुतस्ते ॥११॥

**रावणः** — आः, दुरात्मन्! समरभीरो!

देवाः सेन्द्रा जिता येन दैत्याश्चापि पराङ्मुखाः ।
इन्द्रजित् सोऽपि समरे मानुषेण निहन्यते ॥ १२ ॥

**राक्षसः** — प्रसीदतु प्रसीदतु महाराजः। महाराजपादमूले कुमारमन्तरेणानृतं नाभिधीयते ।

**रावणः** — हा वत्स ! मेघनाद ! (इति मूर्छितः पतति)

**राक्षसः** — महाराज! समाश्वसिहि समाश्वसिहि ।

**रावणः** — (प्रत्यभिज्ञाय)

हा वत्स! सर्वजगतां ज्वरकृत्! कृतास्त्र!
हा वत्स! वासवजिदानतवैरिचक्र! ।
हा वत्स! वीर! गुरुवत्सल! युद्ध[1]शौण्ड!
हा वत्स! मामिह विहाय गतोऽसि कस्मात् ॥१३॥

(इ[2]ति मोहमुपगतः)

**राक्षसः** — हा धिक् त्रैलोक्यविजयी लङ्केश्वर एतामवस्थां प्रापितो हतकेन विधिना। महाराज! समाश्वसिहि समाश्वसिहि ।

**रावणः** — (समाश्वस्य) इदानीमनर्थहेतुभूतया सीतया किमनया त्रैलोक्यविजयविफलया चपलया श्रिया च । किं भोः कृतान्तहतक! अद्यापि भयविह्वलोऽसि ।

इदानीमपि निःस्नेहो वत्सेनेन्द्राजिता विना ।
कष्टं कठोरहृदयो जीवत्येष दशाननः ॥ १४ ॥

(इति सन्तापात् पतति)

**राक्षसः** — हा भो रजनीचरवीरा[3]ः! एवंगते राजन्यन्तःकक्ष्यास्थिता रक्षिणश्चाप्रमत्ता भवन्तु भवन्तः ।

(नेपथ्ये)

भो भो रजनीचरवीराः! समरमुखनिरस्तप्रहस्तनिकुम्भकुम्भक-

१. 'द्धशूर!' ग. पाठः. २. 'ति पतति)' क. ग. घ. पाठः. ३. 'रा अन्तः' ख. पाठः.

णेन्द्रजिद्विकलबलजलधिजनितभयचकितविमुखाः! चपलपलायनमनुचितमविरतममरसमराणि जितवतां भवताम्, अथ च विश्वलोकविजयविख्यातविंशद्*बाहुशालिनि भर्तर्यत्र स्थितवति लङ्केश्वरे[2]।

रावणः — (श्रुत्वा सामर्षम्) गच्छ[3], भूयो ज्ञायतां वृत्तान्तः।

राक्षसः — यदाज्ञापयति महाराजः। (निष्क्रम्य प्रविश्य) जयतु[4] महाराजः। एष हि रामः,

धनुषि निहितबाणस्त्वामतिक्रम्य गर्वा-
द्धरिगणपरिवारो हाससम्फुल्लनेत्रः।
रणशिरसि सुतं ते पातयित्वा तु राज-
न्नभिपतति हि लङ्कां सन्दिधक्षुर्यथैव ॥ १५ ॥

रावणः — (सहसोत्थाय सरोषम्) क्वासौ क्वासौ। (असिमुद्यम्य)

वज्रीभकुम्भतटभेदकठोरधारः
क्रोधोपहारमसिरेष विधास्यति त्वाम्।
सम्प्रत्यवन्त्वनिमिषा इह मत्करस्थः
क्षुद्र! क्व यास्यसि कुतापस! तिष्ठ तिष्ठ ॥ १६ ॥

राक्षसः — महाराज! अलमतिसाहसेन।

१. 'श्ववि' ख. पाठः. २. 'रे। तस्मादप्रमत्ता भवन्तु भवन्तः।' क. पाठः. ३. 'च्छ ज्ञा' ख. ग. पाठः. ४. 'तु लङ्केश्वरः।' ख. घ. पाठः.

* 'विंशद्' इत्येव सर्वेष्वादर्शेषु पठ्यते। किन्तु इदं लेखकप्रमादकृतमपि संभाव्यते, गद्ये 'विंशति' इत्यपि पाठसंभवात्।

**सीता** — (क) अणिट्ठाणि अणरुहाणि अणिमित्ताणि इदाणिं करअंतस्स रावणस्स अइरेण मरणं भविस्सिदि।

**रावणः** — अस्याः कारणेन बहवो भ्रातरः सुताः सुहृदश्च मे निहताः। तस्मादमित्रविषयमस्या हृदयं भित्त्वा कृष्टान्त्रमालालङ्कृतः खड्गाशनिपातेन समनुजयुगलं सकलवानरकुलं ध्वंसयामि।

**राक्षसः** — प्रसीदतु प्रसीदतु महाराजः। अलमलमिदानीमरिबलावलेपमन्तरेणानवरतवृथाप्रयासेन। अवश्यं च स्त्रीवधो न कर्तव्यः।

**रावणः** — तेन हि[2] स्यन्दनमानय।

**राक्षसः** — यदाज्ञापयति महाराजः। (निष्क्रम्य प्रविश्य) जयतु महाराजः। इदं स्यन्दनम्।

**रावणः** — (रथमारुह्य)

समावृतं सुरैरद्य सीते! द्रक्ष्यसि राघवम्।
मम चापच्युतैस्तीक्ष्णैर्बाणैराक्रान्तचेतसम्॥ १७॥

(निष्क्रान्तः सपरिवारो रावणः)

(क) अनिष्टान्यर्हाण्यनिमित्तानीदानीं कुर्वतो रावणस्याचिरेण मरणं भविष्यति

१. 'लं स्त्री' क. ख. घ. ङ. पाठः. २. 'हि क्षिप्रमानीयतां स्यन्दनः।' क. पाठः.

**सीता**—(क) इस्सरा! अत्तणो कुळसदिसेण चारित्तेण जदि अहं अणुसरामि अय्यउत्तं, अय्यउत्तस्स विजओ होदु ।

(निष्क्रान्ता)[1]

पञ्चमोऽङ्कः ।

---

(क) ईश्वराः! आत्मनः कुलसदृशेन चारित्रेण यद्यहमनुसराम्यार्यपुत्रम्, आर्यपुत्रस्य विजयो भवतु ।

१. 'इति निष्क्रान्ताः सर्वे ।' ब. पाठः.

## अथ षष्ठाऽङ्कः ।

(ततः प्रविशति विद्याधरास्त्रयः)

**सर्वे** — एते स्मो भो! एते स्मः ।

**प्रथमः** —

इक्ष्वाकुवंशविपुलोज्ज्वलदीप्तकेतोः

**द्वितीयः** —

रामस्य रावणवधाय कृतोद्यमस्य ।

**तृतीयः** —

सङ्ग्रामदर्शनकुतूहलबद्धचित्ताः

**सर्वे** —

प्राप्ता वयं हिमवतः शिखरात् प्रतूर्णम् ॥ १ ॥

**प्रथमः** — चित्ररथ! एते देवदेवर्षिसिद्धविद्याधरादयो निरन्तरं नभः कृत्वा स्थिताः । तस्माद् वयमप्येतेषामेतान् गणान् परिहरन्तः स्वैरमेकान्ते स्थित्वा रामरावणयोर्युद्धविशेषं पश्यामः ।

**उभौ** — बाढम् ।

(तथा कृत्वा)

**प्रथमः** — अहो प्रतिभयदर्शनीया खल्वियं युद्धभूमिः । इह हि,

रजनिचरशरीरनीरकीर्णा
कपिवरवीचियुता वरासिनक्रा ।
उदधिरिव विभाति युद्धभूमी
रघुवरचन्द्रशरांशुवृद्धवेगा ॥ २ ॥

**द्वितीयः**— एवमेतत् ।

एते पादपशैलभग्नशिरसो मुष्टिप्रहारैर्हताः
क्रुद्धैर्वानरयूथपैरतिबलैरुत्पुच्छकर्णैर्वृताः ।
कण्ठग्राहविवृत्ततुङ्गनयनैर्दष्टोष्ठतीव्रैर्मुखैः
शैला वज्रहता इवाशु समरे रक्षोगणाः पातिताः ॥ ३ ॥

**तृतीयः**— एते चापि द्रष्टव्या भवद्भ्यां,

निशितविमलखड्गाः क्रोधविस्फारिताक्षा
विमलविकृतदंष्ट्रा नीलजीमूतकल्पाः ।
हरिगणपतिसैन्यं हन्तुकामाः समन्ताद्
रभसविवृ[2]तवक्रा राक्षसाः सम्पतन्तः[3] ॥ ४ ॥

**प्रथमः**— अहोतुखलु,

बाणाः पात्यन्ते राक्षसैर्वानरेषु

**द्वितीयः**—

शैलाः क्षिप्यन्ते वानरैर्नैर्ऋतेषु ।

---

१. 'वराः' क. ख. पाठः. २. 'कृ' क. ख. ङ. पाठः. ३. 'न्ति ।' क. पाठः.

**तृतीयः** —

मुष्टिप्रक्षेपैर्जानुसङ्घट्टनैश्च

**सर्वे** --

भीमाश्चित्रं भोः! सम्प्रमर्दः प्रवृत्तः ॥ ५ ॥

**प्रथमः** — रावणमपि पश्येतां भवन्तौ,

कनकरचितदण्डां शक्तिमुल्लालयन्तं
विमलविकृतदंष्ट्रं[1] स्यन्दनं वाहयन्तम् ।
उदयशिखरिमध्ये पूर्णबिम्बं शशाङ्कं
ग्रहमिव भगणेशं राममालोक्य रुष्टम् ॥ ६ ॥

**द्वितीयः** — राममपि पश्येतां भवन्तौ ।

सव्येन चापमवलम्ब्य करेण वीर-
मन्येन सायकवरं परिवर्तयन्तम् ।
भूमौ स्थितं रथगतं रिपुमीक्षमाणं
क्रौञ्चं यथा गिरिवरं युधि कार्त्तिकेयम् ॥ ७ ॥

**तृतीयः** — हहह ।

रावणेन विमुक्तेयं शक्तिः कालान्तकोपमा ।
रामेण स्मयमानेन द्विधा छिन्ना धनुष्मता ॥ ८ ॥

---

१. 'विवृतवदनदं' ख. पाठः.

**प्रथमः**—

शक्तिं निपातितां दृष्ट्वा क्रोधविष्फारितेक्षणः ।
रामं प्रत्यैषवं व(ण?र्ष)मभिवर्षति रावणः ॥ ९ ॥

**द्वितीयः**—अहो रामस्य शोभा ।

एता रावणजीमूताद् बाणधारा विनिस्सृताः ।
विभान्ति राममासाद्य वारिधारा वृषं यथा ॥ १० ॥

**तृतीयः**—एष एषः,

कनकरचितचापं तीक्ष्णमुद्यम्य शीघ्रं
रणशिरासि सु ोरं बाणजालं विधून्वन् ।
रथगतमभियान्तं रावणं याति पङ्क्त्यां
गजपतिमिव मत्त तीक्ष्णदंष्ट्रो मृगेन्द्रः ॥ ११ ॥

**सर्वे**—अये ज्वलित इव प्रभयायं देशः । किन्नुखल्विदम् ।

**प्रथमः**—आ युद्धसामान्यजनितशङ्केन महेन्द्रेण प्रेषितो मातलिवाहितो रथः ।

**द्वितीयः**—उपस्थितं मातलिं दृष्ट्वा तस्य वचनाद् रथमारूढवान् रामः ।

**तृतीयः**—एष हि,

सुरवर[1]जयदर्पदेशिकेऽस्मिन्
दितिसुतनाशकरे रथे विभाति ।
रजनिचरविनाशकारणै[2]ः सं-
स्त्रिपुरवधाय यथा पुरा कपर्दी ॥ १२ ॥

**प्रथमः**—अहो महत् प्रवृत्तं युद्धम् ।

शरवरपरिपीततीव्रबाणं
नरवरनैर्ऋतयोः समीक्ष्य युद्धम् ।
विरतविविधशस्त्रपातमेते
हरिवरराक्षससैनिकाः स्थिताश्च ॥ १३ ॥

**द्वितीयः**—अहोतुखलु,

चारीभिरेतौ परिवर्तमानौ
रथे स्थितौ बाणगणान् वमन्तौ ।
स्वरश्मिजालैर्धरणिं दहन्तौ
सूर्याविव द्वौ नभसि भ्रमन्तौ ॥ १४ ॥

**तृतीयः**—रावणमपि पश्येतां भवन्तौ ।

शरैर्भीमवेगैर्हयान् मर्दयित्वा
ध्वजं चापि शीघ्रं बलेनाभिहत्य ।
महद् बाणवर्षं सृजन्तं नदन्तं
हसन्तं नृदेवं भृशं भीषयन्तम् ॥ १५ ॥

---

१. 'रविजयप्रदेशितेऽस्मि' क. ख ग. पाठः.   २. 'णेऽस्मिाज्ञि' घ. पाठः.

**प्रथमः**—एष हि रामः,

स्थानाक्रामणवामनीकृततनुः किञ्चित् समाश्वास्य वै
तीव्रं बाणमवेक्ष्य रक्तनयनो मध्याह्नसूर्यप्रभः ।
व्यक्तं मातलिना स्वयं नरपतिर्दत्तास्पदो वीर्यवान्
क्रुद्धः संहितवान् वरास्त्रममितं पैतामहं पार्थिवः ॥ १६॥

**द्वितीयः**—एतदस्त्रं,

रघुवरभुजवेगविप्रमुक्तं
ज्वलनदिवाकरयुक्ततीक्ष्णधारम् ।
रजनिचरवरं निहत्य सङ्ख्ये
पुनरभिगच्छति राममेव शीघ्रम् ॥ १७ ॥

**सर्वे**—हन्त निपातितो रावणः ।

**प्रथमः**—

रावणं निहतं दृष्ट्वा पुष्पवृष्टिर्निपातिता ।
एता नदन्ति गम्भीरं भेर्यस्त्रिदिवसं[2]द्मनाम् ॥ १८ ॥

**द्वितीयः**—भवतु । सिद्धं देवकार्यम् ।

**प्रथमः**—तदागम्यताम् । वयमपि तावत् सर्वै[3]हितं रामं सम्भावयिष्यामः ।

१. 'न्त पति' ख. पाठः. २. 'वत्मंसु ॥' ख. पाठः. ३. 'गणसमक्षं रामं सभाजयि' क. ख., 'गणसहितं' क. पाठः.

**उभौ** — बाढम् । प्रथमः कल्पः ।

(निष्क्रान्ताः सर्वे)

**विष्कम्भकः*** ।

---

(ततः प्रविशति रामः)

**रामः** —

हत्वा रावणमाहवेऽद्य तरसा मद्बाणवेगार्दितं
कृत्वा चापि विभीषणं शुभमतिं लङ्केश्वरं साम्प्रतम् ।
तीर्त्वा चैवमनल्पसत्त्वचरितं दोर्भ्यां प्रतिज्ञार्णवं
लङ्कामभ्युपयामि बन्धुसहितः [1]सीतां समाश्वासितुम् ॥१९॥

(प्रविश्य)

**लक्ष्मणः** — जयत्वार्यः । आर्य ! एषा ह्यार्यार्यस्य समीपमुपसर्पति ।

**रामः** — वत्स ! लक्ष्मण !

अपायाच्चं[2] हि वैदेह्या उषिताया रिपुक्षये ।
दर्शनात् साम्प्रतं धैर्यं मन्युर्मे वारयिष्यति ॥ २० ॥

---

१. 'सीतासमाश्वासने' क. ख. घ. ङ. पाठः. २. 'च्यहि' क., 'श्चहि' घ. पाठः.

* 'विष्कम्भकः । षष्ठोऽङ्कः' इति क. पाठः. 'विष्कम्भक' इत्यपठित्वा 'षष्ठोऽङ्कः' इति ख. घ. पुस्तकयोः पठ्यते ।

**लक्ष्मणः** — यदाज्ञापयत्यार्यः । (निष्क्रान्तः)

(प्रविश्य)

**विभीषणः** — जयतु देवः ।

एषा हि राजंस्तव धर्मपत्नी
त्वद्बाहुवीर्येण विधूतदुःखा ।
लक्ष्मीः पुरा दैत्यकुलच्च्युतेव
तव प्रसादात् समुपस्थिता सा ॥ २१ ॥

**रामः** — विभीषण! तत्रैव तावत् तिष्ठतु रजनिचरावमर्शजातकल्मषा इक्ष्वाकुकुलस्याङ्कभूता[1] । राजानं दशरथं पितरमुद्दिश्य न युक्तं भो लङ्काधिपते[2] ! मां द्रष्टुम् । अपिच,

मज्जमानमकार्येषु पुरुषं विषयेषु वै ।
निवारयति यो राजन्! स मित्रं रिपुरन्यथा ॥ २२ ॥

**विभीषणः** — प्रसीदतु देवः ।

**रामः** — नार्हति भवानतः परं पीडयितुम् ।

(प्रविश्य)

**लक्ष्मणः**—जयत्वार्यः। आर्यस्याभिप्रायं श्रुत्वैवाग्निप्रवेशाय प्रसादं प्रतिपालयत्यार्या ।

---

१. 'लाघमानसमुद्यतपताकाभू' क. पाठः. २. 'ते वक्तुं मां' च. पाठः.

**रामः** — लक्ष्मण ! अस्याः पतिव्रतायाश्छन्दमनुतिष्ठ ।

**लक्ष्मणः** — यदाज्ञापयत्यार्यः । ([1]परिक्रम्य) भोः ! कष्टम् ।

विज्ञाय देव्याः शौचं च श्रुत्वा चार्यस्य शासनम् ।
धर्मस्नेहान्तरे न्यस्ता बुद्धिर्दोलायते मम ॥ २३ ॥

कोऽत्र ।

(प्रविश्य)

**हनूमान्** — जयतु कुमारः ।

**लक्ष्मणः** — हनूमन्! यदि ते शक्तिरस्ति, एवमाज्ञापयत्यार्यः ।

**हनूमान्** — अत्र किं तर्कयति कुमारः ।

**लक्ष्मणः** — निष्फलो मम तर्[2]कः । अथवा वयमार्यस्याभिप्रायमनुवर्[3]तितारः । गच्छामस्तावत् ।

**हनूमान्** — यदाज्ञापयति कुमारः ।

(निष्क्रान्तौ)

([4]प्रविश्य)

**लक्ष्मणः** — प्रसीदत्वार्यः । आर्य ! आश्चर्यमाश्चर्यम् । एषा ह्यार्या,

विकसितशतपत्रदामकल्पा
ज्वलनमिहाशु विमुक्तजीविताशा ।

---

१. '(किञ्चिद् गत्वा)' क. पाठः. २. 'र्कः । ननु व' ख. ङ. पाठः. ३. 'र्तयिता' क. घ., 'र्तयिष्यामः ।' ख. पाठः. ४. 'तथा कृत्वा प्रवि' घ. पाठः.

श्रममिह तव निष्फलं च कृत्वा
प्रविशति पद्मवनं यथैव हंसी ॥ २४ ॥

रामः — आश्चर्यमाश्चर्यम् । लक्ष्मण ! निवारय निवारय ।

लक्ष्मणः — यदाज्ञापयत्यार्यः ।

(प्रविश्य)

हनूमान् — जयतु देवः ।

एषा कनकमालेव ज्वलनाद् वर्धितप्रभा ।
पावना पावकं प्राप्य निर्विकारमुपागता ॥ २५ ॥

रामः — (सविस्मयम्) किमिति किमिति ।

लक्ष्मणः — अहो, आश्चर्यम् ।

(प्रविश्य)

सुग्रीवः — जयतु देवः ।

कोनुखल्वेष जीवन्तीमादाय जनकात्मजाम् ।
प्रणम्यरूपः सम्भूतो ज्वलतो हव्यवाहनात् ॥ २६ ॥

लक्ष्मणः — अये अयमार्यां पुरस्कृत्येत एवाभिवर्तते भगवान् विभावसुः ।

---

१. 'पवनावर्धितप्रभात् । पावकात् पावनं प्रा' क. ङ. पाठः. २. 'विभीषणः' ग. पाठः

**रामः** — अये[1] अयं भगवान्[2] हुताशनः । उपसर्पाम-स्तावत् ।

(सर्वे[3] उपसर्पन्ति)

(ततः प्रविशत्यग्निः सीतां गृहीत्वा)

**अग्निः** — एष भगवान् नारायणः । जयतु देवः ।

**रामः** — भगवन् ! नमस्ते ।

**अग्निः** — न मे नमस्कारं कर्तुमर्हति देवेशः ।

इमां गृह्णीष्व राजेन्द्र ! सर्वलोकनमस्कृताम् ।
अपापामक्षतां शुद्धां जानकीं पुरुषोत्तम ! ॥ २७ ॥

अपिच,

इमां भगवतीं लक्ष्मीं जानीहि जनकात्मजाम् ।
सा भवन्तमनुप्राप्ता मानुषीं तनुमास्थिता ॥ २८ ॥

**रामः** — अनुगृहीतोऽस्मि ।

जानतापि च वैदेह्याः शुचितां धूमकेतन ! ।
प्रत्ययार्थं हि लोकानामेवमेव मया कृतम् ॥ २९ ॥

( नेपथ्ये दिव्यगन्धर्वा गायन्ति )

नमो भगवते त्रैलोक्यकारणाय नारायणाय ।

---

१. 'ये भ' क. ङ. पाठः. २. 'न् विभावसुः ।' ख., 'नग्निः । गच्छाम' क. पाठः. ३. 'र्वे परिक्रामन्ति' क. ख. पाठः.

ब्रह्मा ते हृदयं जगत्त्रयपते! रुद्रश्च कोपस्तव
नेत्रे चन्द्रदिवाकरौ सुरपते! जिह्वा च ते भारती।
सब्रह्मेन्द्रमरुद्गणं त्रिभुवनं सृष्टं त्वयैव प्रभो!
सीतेयं जलसम्भवालयरता विष्णुर्भवान् गृह्यताम्॥ ३०॥

(पुनर्नेपथ्ये अपरे गायन्ति)

मग्नेयं हि जले वराहवपुषा भूमिस्त्वयैवोद्धृता
विक्रान्तं भुवनत्रयं सुरपते! पादत्रयेण त्वया।
स्वैरं रूपमुपस्थितेन भवता देव्या यथा साम्प्रतं
हत्वा रावणमाहवे न हि तथा देवाः समाश्वासिताः॥३१॥

अग्निः—भद्रमुख! एते देवदेवर्षिसिद्धविद्याधरगन्धर्वाप्सरोगणाः स्वविभवैर्भवन्तं वर्धयन्ति।

रामः—[1]अनुगृहीतोऽस्मि।

अग्निः— भद्रमुख! अभिषेकार्थमित इतो भवान्।

रामः—[2]यदाज्ञापयति भगवान्।

(निष्क्रान्तौ)

(नेपथ्ये)

जयतु देवः। जयतु स्वामी। जयतु भद्रमुखः। जयतु महाराजः। जयतु रावणान्तकः। जयत्वायुष्मान्।

[3]विभीषणः— एष एष महाराजः,

---

१. 'नमोऽस्तु सर्वदेवेभ्यः।' ख. पाठः. २. 'अनुगृहीतोऽस्मि' क. पाठः.
३. 'लक्ष्मणः—' क. ख. पाठः.

तीर्त्वा प्रतिज्ञार्णवमाहवेऽद्य
सम्प्राप्य देवीं च विधूतपापाम् ।
देवैः समस्तैश्च कृताभिषेको
विभाति शुभ्रे नभसीव चन्द्रः ॥ ३२ ॥

लक्ष्मणः — अहोतुखल्वार्यस्य वैष्णवं तेजः ।

यमवरुणकुबेरवासवाद्यै-
स्त्रिदशगणैरभिसंवृतो विभाति ।
दशरथवचनात् कृताभिषेक-
स्त्रिदशपतित्वमवाप्य वृत्रहेव ॥ ३३ ॥

(ततः प्रविशति कृताभिषेको रामः सीतया सह)

रामः — वत्स! लक्ष्मण!

येनाहं कृतमङ्गलप्रतिसरो भद्रासनारोपितो-
ऽप्यम्बायाः प्रियमिच्छता नृपतिना भिन्नाभिषेकः कृतः ।
व्यक्तं दैवगतिं गतेन गुरुणा प्रत्यक्षतः साम्प्रतं
तेनैवाद्य पुनः प्रहृष्टमनसा प्राप्ताभिषेकः कृतः ॥ ३४ ॥

अग्निः — भद्रमुख! एता हि महेन्द्रनियोगाद् भरतशत्रुघ्नपुरःसराः प्रकृतयो भवन्तमुपस्थिताः ।

१. 'विभीषणः — अहोतुखलु देवस्य' क. ख. पाठः. २. 'प्य देवराजः ।' ख. ग. पाठः ३. 'भो राजन्! ए' घ. पाठः, 'भो राजन्! तेन हि म' ग. पाठः. ४. 'राः सर्वाः प्र' ख. पाठः. ५. 'ताः । इमे' ग. घ. पाठः.

रामः — भगवन्! प्रहृष्टोऽस्मि ।

अग्निः — इमे महेन्द्रादयोऽमृतभुजो भवन्तमभिवर्धयन्ति ।

रामः — अनुगृहीतोऽस्मि ।

अग्निः[1] — भद्रमुख ! किं ते भूयः प्रियमुपहरामि ।

रामः — यदि मे भगवान् प्रसन्नः, किमतः परमहमिच्छामि ।

(भरतवाक्यम्)

भवन्त्वरजसो गावः परचक्रं प्रशाम्यतु ।
इमामपि महीं कृत्स्नां राजसिंहः प्रशास्तु नः ॥ ३५ ॥

(निष्क्रान्ताः सर्वे)

षष्ठोऽङ्कः[3] ।

[4]अभिषेकनाटकं समाप्तम् ।

शुभं भूयात् ।

१. 'ग्निः—किं' ख. पाठः. २. 'सप्तमोऽङ्कः' क. ख. घ. पाठः. ३. 'ङ्कः । अयमेव रामप्रवेशादारभ्य सप्तमः ।' ग. पाठः. ४. 'श्रीरामायणं समाप्तम् ।' क. पाठः.

# श्लोकानुक्रमणी ।

| | | | |
|---|---|---|---|
| No. 15—स्वप्नवासवदत्तम् (Nâtaka) by Bhâsa. | 2 | 8 | 0 |
| No. 16—प्रतिज्ञायौगन्धरायणम् (Do.) Do. | 1 | 8 | 0 |
| No. 17—पञ्चरात्रम् (Do.) Do. | 1 | 0 | 0 |
| No. 18—नारायणीयम् (Stuti) by Nârâyaṇa Bhaṭṭa with the commentary of Desamangala Vârya. | 4 | 0 | 0 |
| No. 19—मानमेयोदयः (Mímâmsâ) by Nârâyaṇa Bhaṭṭa and Nârâyaṇa Paṇḍita. | 1 | 4 | 0 |
| No. 20—अविमारकम् (Nâtaka) by Bhâsa. | 1 | 8 | 0 |
| No. 21—बालचरितम् (Do.) Do. | 1 | 0 | 0 |
| No. 22—मध्यमव्यायोग-दूतवाक्य-दूतघटोत्कच-कर्णभारोरुभङ्गानि (Nâtaka) by Bhâsa | 1 | 8 | 0 |
| No. 23—नानार्थार्णवसंक्षेपः (Kosa) by Kesavaswâmin (1 & 2 Kâṇḍas) | 1 | 12 | 0 |
| No. 24—जानकीपरिणयः (Kâvya) by Chakrakavi. | 1 | 0 | 0 |
| No. 25—काणादसिद्धान्तचन्द्रिका (Nyâya) by Gangâdharasûri | 0 | 12 | 0 |
| No. 26—अभिषेकनाटकम् (Nâtaka) by Bhâsa | 0 | 12 | 0 |

***Apply to:—***

*The Agent for the sale of*

*Government Sanskrit Publications,*

*Trivandrum.*